**IDVIVEKAH -**

*A compilation By Tilaka M Rao.*
*Veda Vijnana Gurukulam*
*Channenahalli, Magadi Road*
*Bangalore - 562 130*
*Ph - 080 64508816*

***Publishers -***
*Veda Vijnana Shodha Samsthanam (R)*
*Recognized by Karnataka Samskrit University*
*Janaseva Premises, Channenahalli, Magadi Road*
*Bangalore - 562 130*
*Ph - 080 64508816*

*First Edition: January, 2011*

*Second Edition: February,2019*



**Pages: 52+ 8**

**Price: Rs. 70.00**

**Copies: 1000**

***Printers:***
*Digi-Scan Pro*
*Banglore*

## प्रथमावृत्तौ विद्वदाशयः

गुरुकुले अतिभाषारूपेण संस्कृतवाङ्मयस्य पावनतमप्रकारः वेदः यथा पठ्यते गुरुपरम्परानुसारं तथा वेदान्तव्याकरणादिशास्त्रं च पदवाक्यप्रमाणज्ञानाम् आचार्याणाम् अन्तिके आर्यभाषारूपेण अधीयते। यथा च संस्कृतमाध्यमेन शास्त्रपाठः क्रियते तथैव दैनंदिने व्यवहारे संस्कृतं भाषारूपेण उपयुज्यते। यथा च बुध्यते, यथा च आचर्यते तथा प्रचार्यते । अस्यामार्षदिशि अर्भकायमानाः जानुभ्यां सञ्चरन्तोऽपि हनुमदुड्डयनमेव आकाङ्क्षन्ते युवानः इति स्वाभाविकम् ।

यच्चिन्त्यते तद्ग्रथ्यते ग्रन्थरूपेण ज्येष्ठछात्रैः । ज्येष्ठानां ज्येष्ठत्वं तत्र प्रमाणितं भवति यत्र ते विदुषां मार्गदर्शनेन स्वाभीष्टकुसुममेकं शोधकुसुममालायां योजयन्ति । यादृशं कुसुमं तादृशी माला । यथा कुसुमे सौगन्ध्यं तथा मालायाम् आकर्षकत्वम् । निष्कृष्टता तदा भवति यदा उत्कृष्टता बुद्धिवैशुद्ध्ये भवति ।

गुरुकुलहितैषिणः, मार्गदर्शकमण्डल्याः सदस्याः कठिणे वेदशास्त्रमार्गे गन्तॄन् एतान् यूनः लघुकार्यं बहुकार्यं मन्यामानाः प्रोत्साहयन्तीति प्रतिपदं अनुभववेद्यम् ।

यद्यपि गन्तव्यः ग्रामः दूरे अस्ति तथापि स्वागतमण्डपप्रवेशकाले एव कुसुमवर्षतः हर्षिताः वयं गुरुकुलीयाचार्यच्छात्राश्च संस्कृतलोकाय प्राथमिकं संस्कृतकुसुमसमुच्चयं अर्पयामः । विश्वसंस्कृतपुस्तकमेला संस्कृतभारत्याः पथप्रदर्शिनी वर्तते । संस्कृतभारत्याः सहयोगेने वेदशास्त्रविद्याप्रवर्तनमार्गे पथिकाः वयं सुरभारत्याः सेवायाम् अनवरतं धन्यान् मन्यामहे । संस्कृतभारतीकुटुम्बीययात्रा सकलसंस्कृततीर्थक्षेत्रगामिनी जीयात् अनवरतम् इत्याशयपूर्वकम् अस्मत्प्रेरकान् सर्वान् अभिनन्दामः ।

प्रो.रामचन्द्र जि. भट्टः,

भारतीयशिक्षणमण्डलस्य अखिलभारतीयगुरुकुलप्रकल्पस्य प्रमुखः

# प्रथमावृत्तेः प्राक्कथनम्

नत्वा गुरुं मतिपतिं वृषभाचलस्थम्
व्यासं मुनिं श्रुतिमतां प्रवरं महर्षिम्।
यत्नाल्पतोऽत्र करवाणि लघुप्रबन्धम्
इत्कार्यजालपरिचायकमल्पबुद्ध्या॥

मुखस्थानीयमिदं व्याकरणशास्त्रं रक्षोहागमलघ्वसन्देहरूपं प्रयोजनमभिलक्ष्य प्रवृत्तम्। सत्सु अपि बहुषु व्याकरणशास्त्रकृत्सु एतर्हि लोके पाणिन्युपज्ञं त्रिमुनिव्याकरणं जेगीय्यते।

पाणिनिः प्रायः चतुर्भिः सूत्रसहस्रैः पूर्वोक्तप्रयोजनप्रयोजकांशान् उपनिबबन्ध। सूत्रस्य सूत्रत्वपरिपिपालयिषया बह्वीः संज्ञाः च प्रणिनाय। तासु संज्ञासु अन्यतमा इत्संज्ञा। तां संज्ञां पुरस्कृत्य बहूनि कार्याणि शताधिकैः सूत्रैः सम्प्रदर्शितानि। इत्संज्ञायाः सामान्यप्रयोजनन्तु लोपः एव। लोपमात्रं प्रयोजनं चेत् वर्णोच्चारणमपि अनर्थकं स्यात्। अतः तद्भिन्नानि च सन्ति अनेकानि प्रयोजनानि स्वरवृद्ध्यादीनि। यथा 'तव्यत्तव्यानीयरः' इति कृदन्तसूत्रेण 'तव्यत्–तव्य' इति प्रत्ययद्वयं विधीयते। यद्यपि अनयोः प्रत्यययोः शरीरन्तु समानमेव तथापि एकस्मिन् प्रत्यये तकारः इत् इति अयं विशेषः दृश्यते। तव्यत्प्रत्यये तकारस्य इत्करणात् 'तित्स्वरितम्' इति सूत्रेण स्वरे व्यत्ययः सम्भवति। एतादृशानि असंख्यानि प्रयोजनानि आविष्कुर्वन् पाणिनिः प्रायः उपत्रिंशानां वर्णानाम् इत्संज्ञां विदधौ।

इत्संज्ञाविषकाणि सूत्राणि प्रथमाध्यायतः आरभ्य अष्टमाध्यायपर्यन्तं विकीर्णानि दृश्यन्ते। तेषां सर्वेषामवगमनं साकल्येन आन्ताध्ययनेन विना न सम्भवति इत्यतः व्याकरणशास्त्रे कृतप्रवेशाः छात्राः कुत्रचिदित्संज्ञायाः प्रयोजनमपश्यन्तः कष्टमनुभवेयुः। तत्परिजिहीर्षया अयं लघुशोधप्रबन्धः मया व्यरचि। प्रथमेऽध्याये इत्संज्ञायाः विधायकानि अतिदेशकानि निषेधकानि च सूत्राणि, द्वितीयेऽध्याये इत्संज्ञकवर्णानां संग्रहः, तृतीये च अध्याये इत्संज्ञायाः प्रयोजनं पञ्चसु विभागेषु, इति

एवं विभज्य चिन्तनम् अकारि। अस्मिन् कार्ये मां प्रेरितवद्भ्यः श्रीजयरामाचार्येभ्यः, एतं प्रबन्धं साकाल्येन परिशील्य दोषान् च परिहृत्य पथिनिर्देशं कृतवद्भ्यः श्रीरमणाचार्येभ्यः च अहं सप्रश्रयं प्रणिपतामि।

एषः प्रबन्धः व्याकरणशास्त्रे कृतप्रवेशानां छात्राणां प्रयोजनाय कल्पेत इत्यहम् आशासे।

बुधजनविधेयः

तिलकः



## द्वितीयावृत्तेः प्राक्कथनम्

संस्कृतभारत्याः सहकारेण प्रकाशितस्य अस्य पुस्तकस्य प्रथमावृत्तेः जनैः इष्टत्वात् शीघ्रतया परिसमाप्तिः अजायत। ततः पुनः प्रकाशनाय बहुभिः प्रेरितः अपि न मम मनः तत्र अनुरक्तम् अभवत्। अतः नैकस्मात् वर्षात् अयं ग्रन्थः अप्रकटिततया एव अवर्तत। वर्षेऽस्मिन् यदा वेङ्कटसुब्रह्मण्येन पुनरहं आगृहीतः तस्य मित्रत्वपूर्णाग्रहं निराकर्तुम् अक्षमः पुनरस्य अल्पेन परिष्कारेण प्रकाशनाय मनः अकरवम्। नाधिकमत्र परिष्कृतम्। केचन अंशाः दोषाः च परिष्कृताः। अस्य ग्रन्थस्य प्रकाशने साहाय्यं च अकरोत् अमेरिकादेशवासी कृष्णन्वर्यः। तस्मै च आधमर्ण्यतां प्रदर्शयामि। अत्रत्यान् गुणान् प्रशंसन्तु दोषान् च प्रदर्श्य पुनरस्य लोकोपयोगिततया परिष्करणाय सहकुर्वन्तु इति प्रार्थये।

बुधजनविधेयः

तिलकः

२५/१०/२०१८

# अनुक्रमणिका

परिशिष्टम्

# इत्संज्ञा

गुणवृद्ध्यादिवत् इत् इत्यपि काचित् संज्ञा व्याकरणशास्त्रे प्रसिद्धा। शास्त्रेऽस्मिन् प्रायः उपत्रिंशानाम् इत्संज्ञा विधीयते अनेकप्रयोजनमभिलक्ष्य। साक्षात् इत्संज्ञाविधायकनि सूत्राणि षडेव। अन्यानि च सन्ति कानिचन सूत्राणि तानि न साक्षात् इत्संज्ञां विदधति अपितु अतिदिशन्ति । सम्प्रति इत्संज्ञाविधायकानि सूत्राणि तेषाम् अर्थश्च उल्लिख्यन्ते।

- उपदेशे (धातुप्रातिपदिकनिपातप्रत्याहारसूत्रप्रत्ययादेशागमाः उपदेशाः) यः अच् अनुनासिकः सः इत्सज्ञां प्राप्नोति। कः अनुनासिकः इत्यत्र व्याकरणपरम्परा एव प्रमाणम्। अनुनासिकस्य अचः उदाहरणं यथा सुप्प्रत्ययेषु अन्यतमे सुप्रत्यये उकारः अनुनासिकः। अतः तस्य इत्संज्ञा। [उपदेशेऽजनुनासिक इत् । (१/३/२)]

- उपदेशे च यत् अन्त्यं हल् तत् इत्संज्ञां प्राप्नोति । तद्यथा, क्विप्प्रत्यये पकारः अन्त्यं हल्। अतः तस्य इत्संज्ञा। [हलन्त्यम् (१/३/३)]

- धातोः आदौ विद्यमानानां ञि टु डु इत्येतेषाम् इत्संज्ञा। तद्यथा ञिमिदा डुपचष् टुवेपृ इत्येतेषु धातुषु क्रमशः ञि टु डु इत्येतेषाम् इत्संज्ञा। [आदिर्ञिटुडवः (१/३/५)]

धातोः अन्ते विद्यमानस्य इर् इति समुदायस्य इत्संज्ञा। तद्यथा च्युतिर् आसेचने इति धातुः। तत्र अन्त्यस्य इर् इत्यस्य इत्संज्ञा। [इर इत्संज्ञा वाच्या। कौमुदी–सूत्रसंख्या – २२६८]

- प्रत्ययस्य आदौ विद्यमानः षकारः, चवर्गीयाः टवर्गीयाः च वर्णाः, तद्धितवर्जितस्य प्रत्ययस्य आदितः वर्तमानाः लकारशकारौ कवर्गीयाः वर्णाः च इत्संज्ञां प्राप्नुवन्ति। तद्यथा 'शिल्पिनि ष्वुन्' (३/१/१४५) इत्यत्र ष्वुन्प्रत्ययस्य षकारस्य, सुप्प्रत्ययेषु अन्यतमस्य जस्प्रत्ययस्य जकारस्य, 'चरेष्टः' (३/२/१६) इत्यत्र टप्रत्ययस्य टकारस्य, 'ल्युट् च' (३/३/११५) इत्यत्र लकारस्य, कर्तरि शप् (३/१/६८) इत्यत्र शपः शकारस्य, प्रियवशे वदः खच् (३/२/३८) इत्यत्र खकारस्य च इत्संज्ञा । [ षः प्रत्ययस्य (१/३/६), चुटू(१/३/७), लशक्वतद्धिते (१/३/८)]

## अतिदेशः

अतिदेशः नाम ये परत्र विहिताः धर्माः तम् अतीत्य अन्यत्र तेषां देशः। एवञ्च अन्यत्र उक्तानां कित्त्वादीनाम् अन्यत्र अनुकर्षः एव अतिदेशः। तन्नियमाः अत्र उल्लिखिताः। व्याकरणशास्त्रे कित्त्वं ङित्त्वं णित्त्वं पित्त्वं च अतिदिश्यते। आदौ कदा एते अतिदेशाः इति प्रदश्यते, ततः कित्त्वादीनां किं प्रयोजनमिति विषये विचारः क्रियते।

### कित्त्वातिदेशः

लिटः किद्वद्भावः –

१. असंयोगाल्लिट् कित् । (१/२/५)

असंयोगात् धातोः परः अपित् लिट्प्रत्ययः कित् भवति । तद्यथा अतुस् – बिभिदतुः । चिच्छिदतुः । अत्र अपितः तसः स्थाने विहितत्वात् अतुस्प्रत्ययः अपित्।

धातुः यदि ऋदुपधः तर्हि गुणात् पूर्वम् एव कित्त्वम्। तद्यथा वृक् इति कश्चन धातुः, लिटि ववृक्+ए इति स्थिते, गुणात् पूर्वं कित्त्वम्। अन्यथा आदौ गुणे संयोगयुक्तत्वात् कित्त्वं न स्यात्। [ऋदुपधेभ्यो लिटि कुत्त्वं गुणात् पूर्वविप्रतिषेधेन – कौ.सूत्रसंख्या २२८९]

२. इन्धिभवतिभ्यां च । (१/२/६)

इन्ध् भू इत्येताभ्यां धातुभ्यां परः लिट्प्रत्ययः कित् भवति । तद्यथा इन्धेः – 'पुत्र इधे अथर्वणः', भवतेः – बभूव । इदं सूत्रं प्रत्याख्यातम्। इन्धेश्छन्दोविषयत्वात् भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यमिति। [कौ.सूत्रसंख्या – ३३९३] श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यम् इति वार्तिकं काशिकायां दृश्यते। अनेन वार्तिकेन एतेभ्यः परः लिट्प्रत्ययः कित् भवति। अत्र केचित् वेति पठन्ति इति पदमञ्जरी। तथा सति कित्त्वं विकल्पेन।

क्त्वाप्रत्ययस्य किद्वद्भावः –

१. मृडमृदगुधकुषक्लिशवदवसः क्त्वा । (१/२/७)

मृडादिभ्यः धातुभ्यः परः क्त्वाप्रत्ययः कित् भवति । अत्र स्यात् प्रश्नः, क्त्वाप्रत्ययः किदेव पुनः किमर्थं किद्वद्भावः अतिदिश्यते? इति। अत्र उच्यते, प्रतिप्रसवः अयम् । 'न क्त्वा सेट् १/२/१८' इति सूत्रेण कित्त्वस्य प्रतिषेधं वक्ष्यति । प्राप्तस्य किन्निषेधस्य वारणाय इदं सूत्रं

प्रवृत्तम्। पुनश्च गुधकुषक्लिशानां तु 'रलो व्युपधाद्धलादेः संश्च १/२/२६' इति विकल्पे प्राप्ते नित्यार्थं वचनम् । मृडित्वा, मृदित्वा इत्यादौ तत्प्रयोजनम् ।

क्त्वासनोः किद्वद्भावः –

२. रुदविदमुषग्रहिस्वपिप्रच्छः संश्च । (१/२/८)

रुदादिभ्यः धातुभ्यः सन्प्रत्ययः क्त्वा च कितौ भवतः। अत्रापि रुदविदमुषीणां 'रलो व्युपधाद्धलादेः संश्च १/२/२६' इति सूत्रेण विकल्पे प्राप्ते नित्यार्थं वचनम् । ग्रहेः ग्रहणं तु 'न क्त्वा सेट् १/२/१८' इति प्रतिषिद्धस्य कित्त्वस्य पुनर्विध्यर्थमेव। स्वपिप्रच्छयोः तु सन्नर्थं ग्रहणम्। अर्थात् स्वपिप्रच्छी सेटौ न । एतयोः 'एकाच उपदेशेऽनुदात्तात् ७/२/१०' इति इट्प्रतिषेधात्। अतः 'न क्त्वा सेट् १/२/१८' इति सूत्रेण निषेधः 'रलो व्युपदाद्धलादेः संश्च १/२/२६' इति सूत्रेण विकल्पः वा न भवति। एवं सति क्त्वा किदेव तिष्ठति। तस्मात् क्त्वाप्रत्ययार्थम् अस्मिन् सूत्रे ग्रहणं नापेक्षितम्। तस्मादुक्तं सन्नर्थं ग्रहणमिति । एतयोः परतः विद्यमानः सन्प्रत्ययः किद्भवति । येन च सम्प्रसारणप्राप्तिः इष्टरूपसिद्धिः च भवति । रुदित्वा/रुरुदिषति। विदित्वा/विविदिषति इत्यादि उदाहरणम्।

३. इको झल् (१/२/९)

इगन्ताद्धातोः परः झलादिः सन् किद्भवति। तद्यथा चि इति इगन्तः धातुः। तस्मात् झलादेः सनः (इडागमरहितस्य सनः, इडागमे सति अजादित्वात्) किद्वद्भावः। चिचीषति। चिकीर्षति।

४. हलन्ताच्च (१/२/१०)

इक्समीपाद्धलः परः झलादिः सन् किद्भवति। बिभित्सति। भिद् इति धातोः सनि इदं रूपम्। सूत्रे हल् इत्यनेन हल्जातेः ग्रहणम्। अतः हल्त्वजात्याक्रान्तानेकव्यक्तिसत्त्वेऽपि सूत्रस्य प्रवृत्तिः भवति। तस्मात् यद्यपि तृंह् इति धातोः सनि, इकः ऋकारात् समीपत्वं हकारेण व्यवधानात् सनः नास्ति, तथापि हल्त्वजात्याक्रान्तानेकव्यक्तिव्यवधानेऽपि सूत्रस्य प्रवृत्तेः अत्र हल्द्वयेन (अनुस्वारः, हकारः) व्यवधानेऽपि सनः कित्त्वं प्रवर्तते।

<u>आशीलिङ्गि किद्वद्भावः –</u>

१. किदाशिषि (३/४/१०४)

आशिषि यः लिङ् तस्य यासुडागमः भवति सः चोदात्तः कित् भवति। इष्यात्।

<u>लिङ्सिचोः किद्वद्भावः –</u>

१. लिङ्सिचावात्मनेपदेषु (१/२/११)

इक्समीपाद्धलः परः झलादिः लिङ्, आत्मनेपदपरः सिच् एतौ कितौ भवतः। अत्र लिङ् इत्यनेन आशीर्लिङः एव ग्रहणम्। तद्यथा भिद् – भित्सीष्ट (लिङ्) । अभित्त (आत्मनेपदपरः सिच्)।

२. उश्च (१/२/१२)

ऋवर्णान्ताद्धातोः परः झलादिः लिङ्, आत्मनेपदपरः सिच् एतौ कितौ भवतः। तद्यथा कृधातोः लिङि कृषीष्ट, सिचि अकृत।

३. हनः सिच् (१/२/१४)

हन्तेर्धातोः परः सिच् कित् भवति। आहत।

४. यमो गन्धने ( १/२/१५)

यमेर्धातोः परः सिच्प्रत्ययः किद्भवति गन्धने अर्थे । उदायत।

५. स्थाघ्वोरिच्च (१/२/१७)

तिष्ठतेः धातोः घुसंज्ञकानां च (दाधाघ्वदाप् १/१/२० इत्यनेन घुसंज्ञा) इकारः अन्तादेशः स्यात् सिच्च किद्भवति आत्मनेपदेषु परतः। उपास्थित। अदित।

**<u>विकल्पेन कित्त्वातिदेशः –</u>**

१. वा गमः ( १/२/१३)

गमेः धातोः परौ झलादी लिङ्सिचौ वा कितौ भवतः। लिङि यथा सङ्गसीष्ट, सङ्गंसीष्ट। सिचि यथा समगत, समगंस्त।

२. विभाषोपयमने (१/२/१६)

यमेः धातोः परः सिच्प्रत्ययः विभाषा कित् भवति उपयमने अर्थे। उपायत रामः सीताम्।

३. रलो व्युपधाद्धलादेः संश्च (१/२/२६)

उकारोपधात् इकारोपधाच्च रलन्तात् हलादेः धातोः परः सन् क्त्वा च सेटौ वा कितौ भवतः। क्त्वाप्रत्यये परे यथा द्युतित्वा, द्योतित्वा, सनि यथा दिद्युतिषते, दिद्योतिषते।

## ङित्त्वातिदेशः

ञिद्भिन्नानां–णिद्भिन्नानां च ङिद्वद्भावः –

१. गाङ्कुटादिभ्योऽञ्णिन्ङित् (१/२/१)

गाङादेशात् कुटादिभ्यश्च परे ञिद्भिन्नाः णिद्भिन्नाः च प्रत्ययाः ङितः स्युः। गाङः – अध्यगीषाताम्। अत्र साताम् इति प्रत्ययः। कुटादिभ्यः – कुटिता। अत्र तृच्प्रत्ययः इडागमश्च।

अस्य सूत्रस्य व्याख्यानावसरे 'व्यचेः कुटादित्वम् अनसि' इति वार्तिकं काशिकायां पठितम्। व्यचधातोः असुन्प्रत्ययात् अन्यत्र एव कुटादित्वमिति अस्य अर्थः। अतः असुनि परे न ङित्त्वम्।

सेट्प्रत्ययस्य ङिद्वद्भावः –

२. विज इट् ( १/२/२)

विजः परः इडादिप्रत्ययः ङिद्वत्स्यात्। उद्विजिता।

अपित्सार्वधातुकस्य ङिद्वद्भावः –

३. सार्वधातुकमपित् (१/२/४)

अपित् सार्वधातुकं ङिद्वद्भवति। कुरुतः। कुर्वन्ति।

लिङः ङिद्वद्भावः –

४. यासुट्परस्मैपदेषूदात्तो ङिच्च (३/४/१०३)

परस्मैपदविषयस्य लिङः यासुडागमः भवति स चोदात्तः भवति ङिच्च। कुर्यात्, कुर्याताम्।

**विकल्पेन ङित्त्वातिदेशः –**

१. विभाषोर्णोः (१/२/३)

ऊर्णुञ् अच्छादने आस्मात्परः इडादिः प्रत्ययः विभाषा ङिद्वद्भवति। ऊर्णुविता, ऊर्णविता।

## णित्त्वातिदेशः

सर्वनामस्थानस्य णिद्वद्भावः –

१. गोतो णित् (७/१/९०)

गोशब्दात्परं सर्वनामस्थानं णित् भवति। गौः गावौ गावः।

२. सख्युरसम्बुद्धौ (७/१/९३)

असम्बुद्धौ यः सखिशब्दः तस्मापरं सर्वनामस्थानं णित् भवति। सखायौ सखायः।

विकल्पेन णिद्वद्भावः –

१. णलुत्तमो वा (७/१/९४)

उत्तमः (उत्तमपुरुषस्य प्रत्ययः) णल् वा णित् भवति। अहं चकार, अहं चकर।

## पित्त्वातिदेशः

१. आडुत्तमस्य पिच्च (३/४/९२)

लोट्सम्बन्धिनः उत्तमपुरुषस्य आडागमः भवति स च उत्तमपुरुषः पिद्भवति। करवाणि, करवाव।

## धातुपाठे अतिदेशः

धातुपाठेऽपि क्वचित् अतिदेशः दृश्यते घटादयः (घटादयः धातवः) मितः, स्वादयः ओदितः इत्येवम्।

## इत्संज्ञानिषेधः

'हलन्त्यम् १/३/३' सूत्रस्य अपवादः –

१. न विभक्तौ तुस्माः (१/३/४)

विभक्तिस्थाः तवर्गसकारमकाराः इतः न स्युः। अतः जसादिषु सकारादीनां लोपः न। विभक्तिसंज्ञा सुपां तिङां च 'विभक्तिश्च' १/४/१०४ इति सूत्रेण विधीयते। 'प्राग्दिशो विभक्तिः' ५/३/१ इति अधिकारे पठिताः प्रत्ययाः अपि विभक्तिसंज्ञां प्राप्नुवन्ति।

स्थानिवद्भावात् प्राप्तस्य पित्त्वस्य अपवादौ –

२. सेर्ह्यपिच्च (३/४/८७)

लोडादेशस्य सेः 'हिः' इत्ययमादेशो भवति अपिच्च भवति। लुनीहि, पुनीहि। सिप्प्रत्ययः पित्। तस्य स्थाने आदिष्टः अयम् अपित्।

३. वाच्छन्दसि (३/४/८८)

लादेशः छन्दसि विषये हिशब्दः वा अपित् भवति। प्रीणाहि। प्रीणीहि।

'लशक्वतद्धिते १/३/८' सूत्रस्य अपवादः –

१. न क्त्वा सेट् (१/२/१८)

क्त्वाप्रत्ययः सेट् न किद् भवति। देवित्वा।

२. निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः (१/२/१९)

शीङादिभ्यः परः निष्ठाप्रत्ययः सेट् न कित् भवति। शयितः शयितवान्।

३. मृषस्तितिक्षायाम् (१/२/२०)

मृषेः धातोः तितिक्षायाम् अर्थे निष्ठा सेट् कित् न भवति। मर्षितः। मर्षितवान्।

४. पूङः क्त्वा च(१/२/२२)

पूङः परः निष्ठाप्रत्ययः क्त्वा च सेट् न कित् भवति। पवितः, पवितवान्। पवित्वा। 'न क्त्वा सेट्' १/२/१८ इति सूत्रेण एव सेट् क्त्वा किन्न इति सिद्धे पुनः अस्मिन् सूत्रे क्त्वाग्रहणं किमर्थम्? इति चेत् नोपधात्थफान्ताद्वा (१/२/२३) इति उत्तरसूत्रार्थम् अत्र पाठः।

विकल्पेन इन्निषेधः –

१. उदुपधाद्भावादिकर्मणोरन्यतरस्याम्। (१/२/२१)

उदुपधाद्धातोः परः भावे आदिकर्मणि च वर्तमानः निष्ठाप्रत्ययः सेट् वा कित् न भवति। द्युतितमनेन, द्योतितमनेन। प्रद्युतितः, प्रद्योतितः।

२. नोपधात्थफान्ताद्वा (१/२/२३)

नकारोपधात् थकारान्तात् फकारान्ताच्च धातोः परः क्त्वाप्रत्ययः सेट् वा कित् न भवति। ग्रथित्वा, ग्रन्थित्वा। अत्र ग्रन्थ्धातोः नकारोपधः थकारान्तः च।

३. वञ्चिलुञ्च्यृतश्च (१/२/२४)

वञ्च्, लुञ्च्, ऋत् इत्येतेभ्यः परः क्त्वाप्रत्ययः सेट् वा कित् न भवति। वचित्वा, वञ्चित्वा।

४. तृषिमृषिकृषेः काश्यपस्य (१/२/२५)

तृषि–मृषि–कृषि इत्येतेभ्यः परः क्त्वाप्रत्ययः सेट् काश्यपस्य आचार्यस्य मते वा न कित् भवति। तृषित्वा, तर्षित्वा। 'न क्त्वा सेट्' १/२/१८ इति निषेधे प्राप्ते विकल्पः विधीयते।

*********

## इत्संज्ञकाः वर्णाः

(अत्र ये वर्णाः इत्संज्ञां प्राप्नुवन्ति तेषां सङ्ग्रहः कृतः विधायकसूत्राणि उदाहरणानि च उक्तानि।)

**अचः –**

| इतः अचः | | इत्संज्ञाविधायकानि सूत्राणि | उदाहरणानि |
|---|---|---|---|
| १ | आ | उपदेशेऽजनुनासिक इत् १/३/२ | ञिमिदा, ञिक्षिदा |
| २ | इ | उपदेशेऽजनुनासिक इत् १/३/२ | टुनदि |
| ३ | ई | उपदेशेऽजनुनासिक इत् १/३/२ | ओलजी ओवजी |
| ४ | उ | उपदेशेऽजनुनासिक इत् १/३/२ | शमु, दमु, डवतु |
| ५ | ऊ | उपदेशेऽजनुनासिक इत् १/३/२ | गुपू |
| ६ | ऋ | उपदेशेऽजनुनासिक इत् १/३/२ | बाधृ, याचृ शतृ |
| ७ | लृ | उपदेशेऽजनुनासिक इत् १/३/२ | गम्लृ, शक्लृ |
| ८ | ए | उपदेशेऽजनुनासिक इत् १/३/२ | कखे, रगे |
| ९ | ओ | उपदेशेऽजनुनासिक इत् १/३/२ | ओजस्वी |

हलः –

| | इतः हलः | इत्संज्ञाविधायकानि सूत्राणि | उदाहरणानि |
|---|---|---|---|
| १ | क् | लशक्वतद्धिते<br>हलन्त्यम् | क्त, क्तवतु<br>ऋलृक्, षुक्, ठक् |
| २ | ख् | लशक्वतद्धिते | खश्, खच् |
| ३ | ग् | लशक्वतद्धिते | ग्मिनि |
| ४ | घ् | चुटू | घ, घञ् |
| ५ | ङ् | लशक्वतद्धिते<br>हलन्त्यम् | ङ्वनिप्, ङीष्<br>एओङ्, अनङ्, अङ् |
| ६ | च् | चुटू<br>हलन्त्यम् | चानश्, च्फञ्<br>ऐऔच्, युच्, णच् |
| ७ | ञ् | चुटू<br>हलन्त्यम् | ञ्युट्, ञः<br>झभञ्, कृञ्, अञ् |
| ८ | ट् | चुटू<br>हलन्त्यम् | टक्, टच्<br>हयवरट्, ल्युट्, विट् |
| ९ | ड् | चुटू | डट्, ड्मतुप् |

| | इतः हलः | इत्संज्ञाविधायकानि सूत्राणि | उदाहरणानि |
|---|---|---|---|
| १० | ण् | चुटू<br>हलन्त्यम् | ण्य, ण्वुल्<br>अण्, अइउण्, लण् |
| ११ | त् | हलन्त्यम् | तव्यत्, यत् |
| १२ | न् | हलन्त्यम् | वुन्, तृन् |
| १३ | प् | हलन्त्यम् | तिप्, क्यप् |
| १४ | म् | हलन्त्यम् | ञमङणनम्, श्नम् |
| १५ | य् | हलन्त्यम् | कपय् |
| १६ | र् | हलन्त्यम् | शषसर्, अनीयर् |
| १७ | ल् | लशक्वतद्धिते<br>हलन्त्यम् | ल्यप्, ल्युट्<br>हल्, ण्वुल्, णमुल् |
| १८ | व् | हलन्त्यम् | खफछठथचटतव् |
| १९ | श् | लशक्वतद्धिते<br>हलन्त्यम् | शप्, शतृ, शानच्<br>जबगडदश्, चानश् |

।

| | इतः हलः | इत्संज्ञाविधायकानि सूत्राणि | उदाहरणानि |
|---|---|---|---|
| २० | ष् | षः प्रत्ययस्य<br>हलन्त्यम् | षाकन्, ष्ट्रन्<br>घढधष् |
| २१ | स् | हलन्त्यम् | छस्, युस् |

समुदायाः –

| | इतः | इत्संज्ञाविधायकानि सूत्राणि | उदाहरणानि |
|---|---|---|---|
| १ | इर् | इर इत्संज्ञा वाच्या | भिदिर्, छिदिर् |
| २ | ञि | आदिर्ञिटुडवः | ञिमिदा |
| ३ | टु | आदिर्ञिटुडवः | टुओश्वि |
| ४ | डु | आदिर्ञिटुडवः | डुवचष् |

छकारादयः (छ, छस् इत्यादयः), ढकारादयः (ढक्, ढञ् इत्यादयः) ठकारादयः (ठक् ठच् इत्यादयः) सर्वेऽपि तद्धिताः। तत्र छकारस्य ढकारस्य ठकारस्य च क्रमात् ईय् एय् इक एते आदेशाः भवन्ति। (आयनेयीनीयियः० ७/१/२, ठस्येकः ७/३/५०) झकारादी प्रत्ययौ

द्वौ – झि झ इति। द्वौ अपि तिङ्प्रत्ययौ। तत्र झकारस्य स्थानेअन्त् अत् एतौ आदेशौ वर्तेते। (झोऽन्तः ७/१/३, अदभ्यस्तात् ७/१/४, आत्मनेपदेष्वनतः ७/१/५) जकारस्य इत्संज्ञा न भवति 'न विभक्तौ तुस्माः' (१/३/४) इति निषिद्धत्वात्।

## इत्संज्ञायाः प्रयोजनम्

यद्यपि इत्संज्ञाविधायकानि कानिचन एव सूत्रणि तथापि इत्संज्ञायाः प्रयोजनं तु महदेव। सम्पूर्णाम् अष्टाध्यायीम् अभिव्याप्य इत्संज्ञायाः प्रयोजनं वर्तते। इसंज्ञाविधानस्य सामान्यप्रयोजनन्तु लोपः। उक्तं च 'तस्य लोपः' (१/३/९) इत्यनेन। यदि तावदेव प्रयोजनं तर्हि उच्चारणम् अपि अनर्थकं स्यात्। अतः लोपः एव परं प्रयोजनं न। अन्यानि च सन्ति नैकानि प्रयोजनानि यानि इत्संज्ञाम् आश्रित्य प्रवर्तन्ते। तद्विषये विस्तरेण जानीमः।

### सवर्णग्रहणम्

उदितः (ह्रस्वः उकारः इत् यस्य सः) कु चु टु तु पु इत्येते स्वसवर्णानां ग्रहकाः भवन्ति। अर्थात् कु इत्येतत् कवर्गीयानां ग्राहकः भवति। एवमन्येपि। तथा च सूत्रं – 'अणुदित्सवर्णस्य चाप्रत्ययः' (१/१/६९), अविधीयमानः अण् उदित् च सवर्णस्य संज्ञा स्यात् इति तदर्थः। उदित् सवर्णान् गृह्णाति इत्यंशस्य अत्र सम्बद्धः। उदाहरणानि यथा –

कु – लशक्वतद्धिते (१/३/८)

चु – चुटू (१/३/७)

टु – ष्टुना ष्टुः (८/४/४१)

तु – स्तो श्चुना श्चुः (८/४/४०)

पु – कुःप्वोः कःपौ च (८/३/३)

एवमन्यानि अपि सन्ति इत्संज्ञायाः प्रयोजनानि, तानि अधिगमनसौलभ्याय अग्रिमेषु अध्यायेषु विभज्य प्रदर्शितानि।

*********

## माहेश्वरसूत्रेषु इत्संज्ञायाः प्रयोजनम्

माहेश्वरसूत्रेषु विद्यमानानाम् अन्त्यवर्णानाम् इत्संज्ञा विधीयते 'हलन्त्यम्' (१/३/३) इति सूत्रेण। प्रत्याहारः (वर्णानां सङ्क्षेपः) एव अस्य इत्संज्ञाविधानस्य प्रयोजनम्। उक्तं च – 'आदिरन्त्येन सहेता (१/१/७१), अन्त्येन इता सहितः आदिः मध्यगानां स्वस्य च संज्ञा स्यात्' इति। व्याकरणशास्त्रे चतुर्दशसूत्रस्थैः इत्संज्ञकैः हल्भिः कृताः, अष्टाध्याय्यां व्यवहृताः प्रत्याहाराः ४१। ते च –

१. एङ् – ए ओ
उदाहरणम् – एङः पदान्तादति (६/१/१०९)
२. यञ् – य व र ल ञ म ङ ण न झ भ
उदाहरणम् – अतो दीर्घो यञि (७/३/१०१)
३. अण् – अ इ उ
उदाहरणम् – ढ्रलोपे पूर्वस्य दीर्घोऽणः (६/३/१११)
४. छव् – छ ठ थ च ट
उदाहरणम् – नश्छव्यप्रशान् (८/३/७)
५. अट् – अ इ उ ऋ ऌ ए ओ ऐ औ ह य व र
उदाहरणम् –शश्छोऽटि (८/४/६३)
६. झष् – झ भ घ ढ ध
उदाहरणम् – एकाचो बशो भष् झषन्तस्य स्ध्वोः (८/२/३७)
७. भष् – भ घ ढ ध
उदाहरणम् – एकाचो बशो भष् झषन्तस्य स्ध्वोः (८/२/३७)
८. अक् – अ इ उ ऋ ऌ
उदाहरणम् – अकः सवर्णे दीर्घः (६/१/१०१)
९. इक् – इ उ ऋ ऌ
उदाहरणम् – इको यणचि (६/१/७७)
१०. उक् – उ ऋ ऌ
उदाहरणम् – उगिदचां सर्वनामस्थाने अधातोः (७/१/७०)
११. अण् – अ इ उ ऋ ऌ ए ओ ऐ औ ह य व र ल
उदाहरणम् – अणुदित्सवर्णस्य चाप्रत्ययः (१/१/६९)
१२. इण् – इ उ ऋ ऌ ए ओ ऐ औ ह य व र ल

उदाहरणम् – इणः षः (८/३/३९)

१३. यण् – य व र ल

उदाहरणम् – इको यणचि (६/१/७७)

१४. अम् – अ इ उ ऋ लृ ए ओ ऐ औ ह य व र ल ञ म ङ ण न। उदाहरणम् – पुमः खय्यम्परे (८/३/६)

१५. यम् – य व र ल ञ म ङ ण न

उदाहरणम् – हलो यमां यमि लोपः (८/४/६४)

१६. ङम् – ङ ण न

उदाहरणम् – ङमो ह्रस्वादचि ङमुण् नित्यम्(८/३/३२)

१७. अच् – अ इ उ ऋ लृ ए ओ ऐ औ

उदाहरणम् –इको यणचि (६/१/७७)

१८. इच् – इ उ ऋ लृ ए ओ ऐ औ

उदाहरणम् – नादिचि (६/१/१०४)

१९. एच् – ए ओ ऐ औ

उदाहरणम् – एचोऽयवायावः (६/१/७९)

२०. ऐच् – ऐ औ

उदाहरणम् – वृद्धिरादैच् (१/१/१)

२१. यय् – य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प

उदाहरणम् – अनुस्वारस्य ययि परसवर्णः (८/४/५८)

२२. मय् – म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प

उदाहरणम् – मय उञो वो वा (८/३/३३)

२३. झय् – झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प

उदाहरणम् – झयो होऽन्यतरस्याम् (८/४/६२)

२४. खय् – ख फ छ ठ थ च ट प क प श ष स ह

उदाहरणम् – पुमः खय्यम्परे (८/३/६)

२५. यर् – य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स।

उदहरणम् – यरोऽनुनासिकेनुनासिको वा (८/४/५८)

२६. झर् – झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स

उदाहरणम् – झरो झरि सवर्णे (८/४/६५)

२७. खर् – ख फ छ ठ थ च त प क प श ष स ह

उदाहरणम् – खरि च (८/४/५५)

२८. चर् – च ट त क प श ष स

उदाहरणम् – अभ्यासे चर्च (८/४/५४)

२९. शर् – श ष स

उदाहरणम् – शरोचि (८/४/४९)

३०. अश् – अ इ उ ऋ लृ ए ओ ऐ औ ह य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द

उदाहरणम् – भोभगोऽघोऽपूर्वस्य योऽशि (८/३/१७)

३१. हश् – ह य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द

उदाहरणम् – हशि च (६/१/११४)

३२. वश् – व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द

उदाहरणम् – नेड् वशि कृति (७/२/८)

३३. जश् – ज ब ग ड द

उदाहरणम् – झलां जश् झशि। (८/४/५३)

३४. झश् – झ भ घ ढ ध ज ब ग ड द

उदाहरणम् – झलां जश् झशि (८/४/५३)

३५. बश् – ब ग ड द

उदाहरणम् – एकाचो बशो भष् झषन्तस्य स्ध्वोः (८/२/३७)

३६. अल् – अ इ उ ऋ लृ ए ओ ऐ औ ह य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स ह ।

उदाहरणम् – अलोन्त्यस्य (१/१/५२)

३७. हल् – ह य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स ह।

उदहरणम् – हलन्त्यम् (१/३/३)

३८. वल् – व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स ह।

उदाहरणम् – लोपे व्योर्वलि (६/१/६६)

३९. रल् – र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स ह।

उदाहरणम् – रलो व्युपधाद्धलादेः संश्च (१/२/२६)

४०. झल् – झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स ह

उदाहरणम् – झलो झलि (८/२/२६)

४१. शल् – श ष स ह

उदाहरणम् – शल इगुपधादनिटः क्सः (३/१/४५)

अन्येऽपि प्रत्याहाराः सन्ति र चय् सुप् तिङ् इत्यादयः। ते न चतुर्दशसूत्रस्थैः इत्संज्ञकैः हल्भिः कृताः। चय् अष्टाध्यायीसूत्रेषु न व्यवहृतः, किन्तु वार्तिके। अतः अत्र तत् न संगृहीतम्।

माहेश्वरसूत्रात् अन्यत्रापि 'आदिरन्त्येन०' सूत्रस्य प्रवृत्तिः एषिता। यथा – 'अभूततद्भावे०' (५/४/५०) इति सूत्रे पठितं कृ इत्येतं, 'कृञो द्वितीय' (५/४/५८) इति सूत्रे पठितं ञ् इत्येतं च आद्यन्तत्वेन आश्रित्य कृतः कृञ् इति प्रत्याहारः, कृ भू अस्ति इत्येषां संज्ञा भवति। ततश्च 'कृञ् चानुप्रयुज्यते लिटि" (३/१४०) इत्यत्र त्रयाणाम् अपि ग्रहणम्।

*********

## धातुषु इत्संज्ञायाः प्रयोजनम्

उपद्विसहस्राः सन्ति धातवः संस्कृतव्याकरणे। ते च प्रायः सानुबन्धाः उच्चारिताः पाणिनिना। अनुबन्धस्य (इत्संज्ञकस्य वर्णस्य) तु महत्प्रयोजनं प्रक्रियादशायां वर्तते। अस्य निदर्शनं किञ्चित् प्रदर्श्यते।

टुनदि इति समृद्ध्यर्थकः भ्वादिगणस्थः कश्चन धातुः। अत्र 'टु' 'इ' इत्यनयोः वर्णयोः इत्संज्ञा वर्तते। 'तस्य लोपः' १/३/९ इति सूत्रेण तयोः लोपः भवति। 'नद्' इति अवशिष्यते।

इवर्णः इत् इति कारणात् 'इदितो नुम् धातोः' ७/१/५८ इति सूत्रेण इदितः धातोः नुमागमः भवति। नुमागमः कुत्र भवति इति आकाङ्क्षायाम् नुमः मकारस्य इत्त्वात् 'मिदचोन्त्यात् परः' १/१/४७ इति सूत्रं प्रवर्तते। तस्मात् नुम् अन्त्यात् अचः परः, उदाहरणे नकारोत्तरवर्ती यः अकारः तस्मात् परः नुम् भवति। नुमि नकारः एव अवशिष्यते। तस्मात् 'नन्द्' इति रूपम्। तस्मात् लटि 'नन्द् ल्' इति स्थिते, लटि टित्करणं 'टित आत्मनेपदानां टेरे' ३/४/७९ इत्यस्य प्रवृत्त्यार्थम्। लटि अकारस्यापि इत्त्वं, लिडादिभ्यः वैलक्षण्यप्रदर्शनार्थम्। लटः स्थाने प्रथमपुरुषस्य एकवचनस्य विवक्षायां तिप् विधीयते। तत्रापि पकारः इत्, पिद्भिन्नानां ङित्त्वम् इति परम्परया प्रयोजनम्। 'नन्द् ति' इति स्थिते, 'कर्तरि शप्' ३/१/६८ इति सूत्रेण शप्प्रत्ययः। अत्र शकारः इत् 'तिङ्शित् सार्वधातुकम्' ३/४/११३ इति सार्वधातुकसंज्ञार्थम्। पकारः अपि इत् 'अनुदात्तौ सुप्पितौ', ३/१/४ इति स्वरार्थम्। ततः शपि अकारः केवलम् अवशिष्टः। तस्मिन् योजिते, नन्दति इति रूपं सिद्ध्यति। अस्य धातोः परस्मैपदित्वमपि न स्वरितेत्, न वा ङित्, नापि अनुदात्तेत्, न च ञित् इति कारणात् ('शेषात् कर्तरि परस्मैपदम्' १/३/७८) यतः स्वरितेत्वादिधर्मयुक्तानाम् आत्मनेपदित्वम् उभयपदित्वं वा विहितं 'अनुदात्त ङित आत्मनेपदम्' १/३/१२, 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' १/३/७२ इति सूत्राभ्याम्।

पुनश्च नन्द्धातुः ट्विदपि। अस्य प्रयोजनं तु 'ट्वितोऽथुच्' ३/३/८९ इति सूत्रेण निर्दिष्टम्, भावे अथुच्प्रत्ययः ट्वितः धातोः भवति इति। तेन 'नन्दथुः' इति रूपमपि सिद्ध्यति। अथुच्प्रत्यये च चकारः इत्, अतः 'चितः' ६/१/१६० इति सूत्रेण अन्तोदात्तता भवति।

एवम् इत्संज्ञायाः प्रयोजनं सवत्र विद्यते व्याकरणशास्त्रे। अग्रिमकोष्ठके धातुसम्बद्धानि इत्संज्ञायाः प्रयोजनानि सङ्गृहीतानि।

| इद्वर्णाः → प्रयोजनम् ↓ | अनुदात्तः | स्वरितः | आ | इ | ई | उ |
|---|---|---|---|---|---|---|
| उभयपदित्वम् | × | ☑ | × | × | × | × |
| इडागमनिषेधः | × | × | ☑ | × | ☑ | × |
| इडागमविकल्पः | × | × | × | × | × | ☑ |
| आदेशाभावः | × | × | × | ☑ | × | × |
| आगमः | × | × | × | ☑ | × | × |
| ह्रस्वनिषेधः | × | × | × | × | × | × |
| वृद्धिनिषेधः | × | × | × | × | × | × |
| प्रत्ययप्राप्तिः | ☑ | × | × | × | × | × |
| ह्रस्वः | × | × | × | × | × | × |
| दीर्घः | × | × | × | × | × | × |
| स्वरः | ☑ | × | × | × | × | × |
| आत्मनेपदित्वम् | ☑ | × | × | × | × | × |

| इड्वर्णाः → प्रयोजनम् ↓ | ऊ | ॠ | ॡ | ए | ओ | ङ् | ञ् |
|---|---|---|---|---|---|---|---|
| उभयपदित्वम् | × | × | × | × | × | × | ☑ |
| इडागमनिषेधः | ☑ | × | × | × | × | × | × |
| इडागमविकल्पः | × | × | × | × | × | × | × |
| नकारः | × | × | × | × | ☑ | × | × |
| आगमः | × | × | × | × | × | × | × |
| ह्रस्वनिषेधः | × | ☑ | × | × | × | × | × |
| वृद्धिनिषेधः | × | × | × | ☑ | × | × | × |
| प्रत्ययप्राप्तिः | × | × | × | × | × | × | × |
| ह्रस्वः | × | × | × | × | × | × | × |
| दीर्घः | × | × | × | × | × | × | × |
| स्वरः | × | × | × | × | × | ☑ | × |
| आत्मनेपदित्वम् | × | × | × | × | × | ☑ | × |
| विकरणप्रत्ययः | × | × | ☑ | × | × | × | × |

| इद्वर्णाः → प्रयोजनम् ↓ | ञि | म् | डु | टु | श् | ष् |
|---|---|---|---|---|---|---|
| उभयपदित्वम् | × | × | × | × | × | × |
| इडागमनिषेधः | × | × | × | × | × | × |
| इडागमविकल्पः | × | × | × | × | × | × |
| नकारः | × | × | × | × | × | × |
| आगमः | × | × | × | × | × | × |
| ह्रस्वनिषेधः | × | × | × | × | × | × |
| वृद्धिनिषेधः | × | × | × | × | × | × |
| प्रत्ययप्राप्तिः | ☑ | × | ☑ | ☑ | × | ☑ |
| ह्रस्वः | × | ☑ | × | × | × | × |
| दीर्घः | × | ☑ | × | × | × | × |
| स्वरः | × | × | × | × | × | × |
| आत्मनेपदित्वम् | × | × | × | × | ☑ | × |

| इड्वर्णाः → प्रयोजनम् ↓ | इरित् | ञीत् | ट्वित् | ड्वित् |
|---|---|---|---|---|
| उभयपदित्वम् | × | × | × | × |
| इडागमनिषेधः | × | × | × | × |
| इडागमविकल्पः | × | × | × | × |
| नकारः | × | × | × | × |
| आगमः | × | × | × | × |
| ह्रस्वनिषेधः | × | × | × | × |
| वृद्धिनिषेधः | × | × | × | × |
| प्रत्ययप्राप्तिः | × | ☑ | ☑ | ☑ |
| ह्रस्वः | × | × | × | × |
| दीर्घः | × | × | × | × |
| स्वरः | × | × | × | × |
| आत्मनेपदित्वम् | × | × | × | × |
| विकरणप्रत्ययः | ☑ | × | × | × |

उक्तप्रयोजनसूचकसूत्रोपस्थापनम् –

## अनुदात्तेत्

आत्मनेपदित्वम् –

अनुदात्तङित आत्मनेपदम् (१/३/१२)इति सूत्रेण अनुदात्तेतः उपदेशे यः ङित् तदन्ताच्च धातोः लस्य स्थाने आत्मनेपदं विधीयते। तद्यथा एध_ धातुः अनुदात्तेत्। अतः तस्मात् लस्य आत्मनेपदप्रत्यये एधते इति रूपम्।

प्रत्ययप्राप्तिः –

अनुदात्तेतश्च हलादेः(३/२/१४९) इति सूत्रेण अनुदात्तेत् यः धातुः हलादिः अकर्मकः, ततः युच् प्रत्ययः विधीयते। वृतु_, वृधु_ अनयोः युचि प्रत्यये कृते, अनादेशे वर्त्तनः, वर्द्धनः इति रूपे।

स्वरः –

तास्यनुदात्तेन्ङिद्दुपदेशाल्लसार्वधातुकमनुदामह्न्विङोः (६/१/१८३) इति सूत्रेण अनुदात्तेतः परं लसार्वधातुकमनुदात्तं भवति ह्नुङ् इङ् इत्येताभ्यां परं वर्जयित्वा। आसधातुः अनुदात्तेत्। अतः य आस्ते[1] इति रूपम्।

## स्वरितेत्

उभयपदित्वम् –

स्वरितञितः कर्त्रभिप्राये क्रियाफले (१/३/७२) इति सूत्रेण स्वरितेतः ये धातवः तेभ्यः लस्य आत्मनेपदं भवति कर्तृगामिनि क्रियाफले। यज[1]धातुः स्वरितेत्। अतः यज्धातोः कर्तृगामिनि क्रियाफले आत्मनेपदप्रत्यये यजते इति रूपम्। एवमन्येषु अपि।

## आदित्

इडागमनिषेधः –

आदितश्च (७/२/१६) इति सूत्रेण आदितः धातोः निष्ठायामिडागमनिषेधः क्रियते। अतः ञिमिदा, ञिक्ष्विदा अनयोः धात्वोः इडागमाभावे, मिन्नः, मिन्नवान्, क्ष्विण्णः, क्ष्विण्णवान् इति रूपाणि भवन्ति।

विभाषा भावादिकर्मणो (७/२/१७) इति सूत्रेण भावे आदिकर्मणि

च आदितः धातोः निष्ठायां विकल्पेन इडागमनिषेधः क्रियते। अतः ञिष्विदाधातोः प्रस्वेदितः प्रस्विन्नः इति रूपद्वयम्।

## इदित्

आगमः –

इदितो नुम् धातोः (७/१/५८) इति सूत्रेण इदितः धातोः नुमागमः भवति। अतः टुनदिधातोः नुमागमे अनुस्वारे परसवर्णे च नन्दति इत्यादीनि रूपाणि।

लोपाभावः –

अनिदितां हल उपधायाः क्ङिति (६/४/२४) इति सूत्रेण अनिदिताम् अङ्गानां हलन्तानाम् उपधायाः नकारस्य लोपः विधीयते क्ङिति प्रत्यये परतः। अतः इदितः धातोः नकारस्य लोपः न भवति इत्यपि इदित्करणस्य प्रयोजनम्। अनिदिताम् इति उक्तत्वात् वन्द्यते इत्यत्र नकारस्य लोपः न भवति।

## ईदित्

इडगमनिषेधः –

श्वीदितो निष्ठायाम् (७/२/१४) इति सूत्रेण श्वयतेः ईदितश्च निष्ठायाम् इडागमः निषिध्यते। अतः ओलस्जी, ओविजी अनयोः निष्ठायाम् (क्त, क्तवतू) इडागमाभावे लग्नः उद्विग्नः इत्यादीनि रूपाणि।

## उदित्

इडागमविकल्पः –

उदितो वा (७/२/५६) उदितः धातोः क्त्वाप्रत्यये परतः वा इडागमः विधीयते। अतः शमु, तमु, दमु इत्येतेषां धातूनां क्रमशः शमित्वा/ शान्त्वा, तमित्वा/तान्त्वा, दमित्वा/दान्त्वा इति रूपाणि।

## ऊदित्

इडागमविकल्पः –

स्वरतिसूतिसूयतिधूञूदितो वा (७/२/४४) इति सूत्रेण स्वरति, सूति, सूयति, धूञ् इत्येतेभ्यः ऊदितः च परस्य वलादेः आर्धधातुकस्य

वा इडागमः विधीयते। अतः ऊदितः गुपूधातोः तृच्प्रत्यये परे गोप्ता, गोपिता इति रूपद्वयम्।

## ऋदित्

ह्रस्वनिषेधः –

नाग्लोपिशास्वृदिताम् (७/४/२) इति सूत्रेण अग्लोपिनः, शास्तेः, ऋदितां च उपधायाः ह्रस्वः निषिध्यते चङ्परे णौ। अतः बाधृधातोः याचृधातोः च अबबाधत्, अययाचत् इति रूपे। ह्रस्वः न भवति।

## ऌदित्

विकरणप्रत्ययः –

पुषादिद्युताद्लृदितः परस्मैपदेषु (३/१/५५) इति सूत्रेण पुषादिभ्यः द्युतादिभ्यः लृदितः च धातुभ्यः परस्य च्लेः परस्मैपदेषु परतः अङ् विधीयते। तस्मात् लृदितः गम्लृधातोः अगमत् इति, शक्लृधातोः अशकत् इति च रूपम्।

## एदित्

वृद्धिनिषेधः –

हम्यन्तक्षणश्वसजागृणिश्व्येदिताम् (७/२/५) इति सूत्रेण हकारान्तानां मकारान्तानां यकरान्ताम् अङ्गानां क्षण–श्वस–जागृ–ण्यन्तः–श्वि इत्येतेषाम् एदितां च वृद्धिर्न भवति इडादौ सिचि। अतः रगे, स्थगे, कखे एषां धातूनां अरगीत्, अस्थगीत्, अकखीत् इति रूपाणि।

## ओदित्

नकारः –

ओदितश्च (८/२/४५) इति सूत्रेण ओकारेतः धातोः उत्तरस्य निष्ठातकारस्य नकारादेशः विधीयते। तस्मात् ओदितः ओलस्जीधातोः लग्नः, लग्नवान् इति, ओविजीधातोः उद्विग्नः, उद्विग्नवान् इति रूपाणि।

## ङित्

आत्मनेपदत्वम् –

अनुदात्तङितः आत्मनेपदम् (१/३/१२) इति सूत्रेण अनुदात्तेतः उपदेशे यः ङित् तदन्ताच्च धातोः लस्य स्थाने आत्मनेपदं विधीयते। अतः षुङ्, शीङ् अनयोः आत्मनेपदप्रत्ययप्राप्त्या सुते शेते इति रूपे।

स्वरः –

तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः (६/१/१८३) इति सूत्रेण ङितः परं लसार्वधातुकमनुदात्तं भवति ह्नुङ् इङ् इत्येताभ्यां परं वर्जयित्वा। सूते[1]। षूङ्धातुः ङित्।

## ञित्

उभयपदित्वम् –

स्वरितञितः कर्त्रभिप्राये क्रियाफले (१/३/७२) इति सूत्रेण ञितः ये धातवः तेभ्यः लस्य आत्मनेपदं भवति कर्तृगामिनि क्रियाफले। तस्मात् षुञ्, कृञ् अनयोः धात्वोः सुनुते, कुरुते इति रूपे कर्तृगामिनि क्रियाफले। परगामिनि क्रियाफले परस्मैपदं भवत्येव। अतः उभयपदित्वम्।

## मित्

ह्रस्वः –

मितां ह्रस्वः (६/४/९२) इति सूत्रेण मितः धातवः ये 'घटादयः मितः' इति गणपाठेन ये प्रतिपादिताः तेषाम् उपधायाः ह्रस्वः विधीयते णौ परतः। घटयति, व्यथयति, जनयति, शमयति इत्यादीनि उदाहरणानि। णिचं निमित्तीकृत्य वृद्धौ, अनेन ह्रस्वः।

## शित्

आत्मनेपदित्वम् –

शदेः शितः (१/३/६०) इत्यनेन शिद्भाविनः शदेः आत्मनेपदं विधीयते। तस्मात् शद्लृ धातोः शीयते इति रूपम्। धातोः शप्, सः च शित्। 'पाघ्राध्मास्था०' ७/३/७८ इति सूत्रेण धातोः शीयादेशः।

म्रियतेर्लुङ्लिङोश्च (१/३/६१) लुङ्लिङोः शितश्च प्रकृतिभूतात् मृङः तङ् स्यात् नान्यत्र। शिद्भूतस्य शपः प्रकृतिभूतत्वात् मृङः म्रियते म्रियेते म्रियन्ते इत्यादौ आत्मनेपदम्।

## षित्

प्रत्ययप्राप्तिः –

षिद्भिदादिभ्योङ् (३/३/१०४) षिद्भ्यः भिदादिभ्यश्च स्त्रियामङ् प्रत्ययः भवति। अतः जृष्, त्रपूष् अनयोः जरा, त्रपा इति रूपे।

न केवलं वर्णेभ्यः किन्तु केभ्यश्चित् समुदायेभ्यः अपि इत्संज्ञा विहिता विद्यते। तेषां प्रयोजनमत्र उपन्यस्तम् अस्ति।

## इरित्

विकरणप्रत्ययः –

इरितो वा (३/१/५७) इत्यनेन इरितः धातोः परस्य च्लेः अङादेशः विकल्पेन स्यात् परस्मैपदे परे। अतः 'च्युतिर्' धातोः अच्युतत्, अच्योतीत् इति रूपद्वयम्।

## ञीत्

प्रत्ययप्राप्तिः –

ञीतः क्तः (३/२/१८७) इत्यनेन ञीतः धातोः वर्तमाने अर्थे क्तप्रत्ययः भवति। यथा ञिमिदा स्नेहने इत्यस्य क्तप्रत्यये, मिन्नः इति रूपम्। एवं ञिक्ष्विदा इत्यस्य क्ष्विण्णः, ञिइन्धी इत्यस्य इद्धः इति च रूपम्।

## ट्वित्

प्रत्ययप्राप्तिः –

ट्वितोऽथुच् (३/३/८९) इदं सूत्रं ट्वितः धातोः अथुच्प्रत्ययं विदधाति भावे। तस्मात् टुवेपृ, टुओश्वि अनयोः अथुच्प्रत्यये कृते वेपथुः, श्वयथुः इति रूपे।

## ड्वित्

प्रत्ययप्राप्तिः –

ड्वितः क्त्रिः (३/३/८८) इत्यनेन ड्वितः धातोः क्त्रिप्रत्ययः विधीयते भावे। अस्मिन् प्रत्यये कृते, डुपचष् इत्यस्य पक्त्रिमम्, डुपप् इत्यस्य उप्त्रिमम्, डुकृञ् इत्यस्य कृत्रिमम् इति रूपम्।

*********

## गणपाठेषु इत्संज्ञायाः प्रयोजनम्

गणपाठः पाणिनिना प्रणीतः प्रक्रियासौकर्याय। तत्र केचन शब्दाः इत्संज्ञासहिताः सन्ति। यथा 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' ३/१/१३४ इति सूत्रस्य गणपाठे 'नदट्', 'भषट्' इत्यादिशब्दाः टितः पठिताः। तत्र टित्करणस्य प्रयोजनं तु –

टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः (४/१/१५)

इति सूत्रेण स्त्रियां विधीयमानस्य ङीपः प्राप्तिः। तेन नदी भषी इत्यादीनि रूपाणि सिद्ध्यन्ति।

*********

## आदेशागमयोः इत्संज्ञायाः प्रयोजनम्

येन विधीयमानेन अन्यत् प्रसक्तं निवर्तते सः आदेशः। उक्तं च 'शत्रुवदादेशः' इति वृद्धैः। अन्यम् अनिवर्त्य अपूर्वस्य उपजनः आगमः। तदुक्तं 'मित्रवदागमः' इति।

आदेशागमभेदनिर्धारणे च इत्संज्ञा सहकरोति। ये च ङितः शितः च ते आदेशाः भवन्ति (ङिद्भिन्नाः शिद्भिन्नाः अपि आदेशाः सन्ति) । ये च कितः मितः टितः ते तु आगमाः भवन्ति। तेषाम् आद्याद्यवयवत्वेन विधानात्। तत्सम्बद्धनि सूत्राणि अत्र उपन्यस्तानि सोदाहरणम्।

<u>आदेशः –</u>

ङिच्च (१/१/५३)

ङित् अनेकाल् अपि अन्त्यस्य एव स्यात्। 'अनेकाल्शित् सर्वस्य' १/१/५५ इति सूत्रस्य अपवादः। यथा 'सख्युरसम्बुद्धौ' ७/१/९२ इति सूत्रेण विधीयमानः अनङ् अन्त्यस्य इकारस्य (सखि) स्थाने भवति। 'आनङ् ऋतो द्वन्द्वे' ६/३/२५ इत्यादयः अन्ये ङित्प्रदेशाः।

यदि ङित्करणस्य प्रयोजनान्तरं वर्तते तदा अस्य सूत्रस्य प्रवृत्तिः नास्ति। तद्यथा 'तुह्योस्तातङ् आशिष्यन्यतरस्याम्' ७/१/३५ इत्यनेन तुह्योः स्थाने तातङ् विधीयते। अत्र ङित्करणस्य गुणवृद्धिप्रतिषेधादिरूपप्रयोजनस्य सत्त्वात् 'ङिच्च' इति सूत्रम् 'अनेकाल्शित्सर्वस्य' इति सूत्रं न बाधते।

अनेकाल्शित्सर्वस्य (१/१/५५)

अनेकाल् यः आदेशः शिच्च सः सर्वस्य षष्ठीनिर्दिष्टस्य स्थाने भवति। अतः 'अष्टाभ्य औश्' ७/१/२१ इति विधीयमानः औश्, शित्वात् सर्वस्य जसः शसः च स्थाने भवति।

आगमः –

आद्यन्तौ टकितौ (१/१/४६)

टित्कितौ यस्य उक्तौ तस्य आद्यन्तावयवौ स्तः। टित् आद्यवयवः भवति। कित् अन्तावयवः भवति। टित्प्रदेशाः यथा – 'आर्धधातुकस्य इड्वलादेः ७/२/३५, अनेन तव्य इत्यस्य इडागमे इतव्य इति रूपम्। कित्प्रदेशाः – 'ङ्णोः कुक्टुक् शरि' ८/३/२८, 'भियो हेतुभये षुक्' ७/३/४० इत्यादि।

मिदचोन्त्यात्परः (१/१/४७)

अचां मध्ये योऽन्त्यः तस्मात् परः तस्यैव अन्तावयवः मित् स्यात्। अतः 'नपुंसकस्य झलचः' ७/१/७२ इति विधीयमाणः नुम् अन्त्यात् अचः परः भवति। तद्यथा फल इ इति स्थिते अन्त्यात् अचः परं नुमागमे फलानि इति रूपम्। एवं 'रुधादिभ्यः श्नम्' ३/१/७८ इत्यादौ।

## प्रत्ययेषु इत्संज्ञायाः प्रयोजनम्

सप्तविधप्रत्ययाः प्रसिद्धाः पाणिनीये व्याकरणे कृत्तद्धिततिङादयः। प्रत्ययाः अपि सानुबन्धाः एव उच्चारिताः पाणिनिना प्रक्रियासौकर्याय। यथा – प्रजापतेः अपत्याद्यर्थे ण्यप्रत्ययः विहितः। तस्मिन् प्रत्यये णकारः इत्संज्ञकः। अतः 'तद्धितेष्वचामादेः' ७/२/११७ इति सूत्रस्य प्रवृत्तिः, तेन च वृद्धिः भवति। ततः 'प्राजापत्यः' इति सिध्यति। एवं बहुभ्यः वर्णेभ्यः प्रत्ययेषु इत्संज्ञा वर्तते। तेषां प्रयोजनसूचकानि सूत्राणि अत्र क्रमशः सङ्गृहीतानि। आदौ इत्संज्ञकम् एकं वर्णमाश्रित्य प्रवृत्तानि सूत्राणि निर्दिष्टानि। ततः यस्मिन् इत्संज्ञकवर्णद्वयस्य इत्संज्ञकवर्णत्रयस्य प्रयोजनानि वर्तन्ते तानि उल्लिखितानि।

आदौ तावत् प्रयोजनसारसङ्ग्रहः कोष्ठके प्रदर्श्यते। यद्यपि लोपादयः सर्वेऽपि आदेशाः एव, तथापि कोष्ठके अपठिताः अवशिष्टाः सर्वेऽपि आदेशपदेन अत्र सङ्गृह्यन्ते। तद्दृश्यताम् –

| इड्वर्णाः → प्रयोजनम् ↓ | उ ऋ | क् | ख् | ग् |
|---|---|---|---|---|
| लोपः | × | ☑ | × | × |
| प्रत्ययः | ☑ | × | × | × |
| ह्रस्वः | ☑ | ☑ | ☑ | × |
| नुमागमः | ☑ | × | × | × |
| दीर्घः | × | ☑ | × | × |
| सम्प्रसारणम् | × | ☑ | × | × |
| आगमः | × | ☑ | ☑ | × |
| आगमनिषेधः | × | ☑ | × | ☑ |
| स्वरः | × | ☑ | × | × |
| वृद्धिः | × | ☑ | × | × |
| आकारः | × | ☑ | × | × |
| कुत्वम् | × | × | × | × |
| संज्ञा | × | × | × | × |
| गुणः | × | × | × | × |
| लुक् | × | × | × | × |
| गुणवृद्धिनिषेधः | × | ☑ | × | ☑ |
| अतिदेशः | × | × | × | × |
| आदेशः | × | ☑ | × | × |

| इद्वर्णाः → प्रयोजनम् ↓ | घ | ङ | च | ञ् | ट |
|---|---|---|---|---|---|
| लोपः | × | ☑ | × | × | × |
| प्रत्ययः | × | × | × | ☑ | ☑ |
| ह्रस्वः | × | ☑ | × | × | × |
| नुमागमः | × | × | × | × | × |
| दीर्घः | × | × | × | × | × |
| सम्प्रसारणम् | × | ☑ | × | × | × |
| आगमः | × | ☑ | × | ☑ | × |
| आगमनिषेधः | × | × | × | × | × |
| स्वरः | × | × | ☑ | ☑ | × |
| वृद्धिः | × | × | × | ☑ | × |
| आकारः | × | × | × | ☑ | × |
| कुत्वम् | ☑ | × | × | × | × |
| संज्ञा | × | ☑ | × | × | × |
| गुणः | × | ☑ | × | × | × |
| लुक् | × | × | × | ☑ | × |
| गुणवृद्धिनिषेधः | × | ☑ | × | × | × |
| अतिदेशः | × | × | × | ☑ | × |
| आदेशः | × | ☑ | × | ☑ | ☑ |

| इद्वर्णाः → प्रयोजनम् ↓ | ङ | ण | त | न | प |
|---|---|---|---|---|---|
| लोपः | ☑ | × | × | × | × |
| प्रत्ययः | × | × | × | × | × |
| ह्रस्वः | × | × | × | × | × |
| नुमागमः | × | × | × | × | × |
| दीर्घः | × | × | × | × | × |
| सम्प्रसारणम् | × | × | × | × | × |
| आगमः | × | ☑ | × | × | ☑ |
| आगमनिषेधः | × | × | × | × | × |
| स्वरः | × | × | ☑ | ☑ | ☑ |
| वृद्धिः | × | ☑ | × | × | ☑ |
| आकारः | × | ☑ | × | × | × |
| कुत्वम् | × | × | × | × | × |
| संज्ञा | × | × | × | × | × |
| गुणः | × | × | × | × | ☑ |
| लुक् | × | × | × | × | × |
| गुणवृद्धिनिषेधः | × | × | × | × | × |
| अतिदेशः | × | ☑ | × | × | ☑ |
| आदेशः | × | ☑ | × | × | × |

| इद्वर्णाः → प्रयोजनम् ↓ | र | ल | श | ष | स |
|---|---|---|---|---|---|
| लोपः | × | × | × | × | × |
| प्रत्ययः | × | × | × | ☑ | × |
| ह्रस्वः | × | × | ☑ | × | × |
| नुमागमः | × | × | × | × | × |
| दीर्घः | × | × | ☑ | × | × |
| सम्प्रसारणम् | × | × | × | × | × |
| आगमः | × | × | × | × | × |
| आगमनिषेधः | × | × | × | × | × |
| स्वरः | ☑ | ☑ | × | × | × |
| वृद्धिः | × | × | × | × | × |
| आकारः | × | × | × | × | × |
| कुत्वम् | × | × | × | × | × |
| संज्ञा | × | × | × | × | ☑ |
| गुणः | × | × | ☑ | × | × |
| लुक् | × | × | × | × | × |
| गुणवृद्धिनिषेधः | × | × | × | × | × |
| अतिदेशः | × | × | × | × | × |
| आदेशः | × | × | ☑ | × | × |

केषुचित् प्रत्ययेषु इत्करणं प्रत्ययान्तरात् वैलक्षण्यप्रदर्शनार्थमेव, तेन तं प्रत्ययाश्रित्य कार्यविधानकाले भ्रमः न जायते। तद्यथा सुप्प्रत्ययेषु सु ङसि अनयोः प्रत्यययोः उकारस्य इकारस्य च क्रमात् इत्त्वं वर्तते। तस्य 'ङसिड्योः स्मात्स्मिनौ' ७/१/१५ इत्यादिकार्यविधाने प्रयोजनम्। एतादृशं प्रयोजनं कोष्ठके न उल्लिखितम्।

इत्संज्ञकस्य एकस्य वर्णस्य प्रयोजनप्रदर्शकानि सूत्राणि–

## उगित्

प्रत्ययः –

उगितश्च (४/१/६) इत्यनेन उगिदन्तात् प्रातिपदिकात् स्त्रियां ङीप्प्रत्ययः विधीयते। भवत् इति शब्दस्य डवतुप्रत्ययान्तत्वेन उगिदन्तत्वात् अनेन ङीपि भवती इति रूपम्। एवं पचन्ती व्रजन्ती इत्यादि।

ह्रस्वः –

उगितश्च (६/३/४५) उगितः परा या नदी तदन्तस्य घादिषु अन्यतरस्यां ह्रस्वः भवति। ह्रस्वपक्षे विदुषितरा इति उदाहरणम्। विदेः वसुप्रत्यये विद्वस् इति रूपम्। प्रत्ययस्य उगित्त्वात्, तस्मात् परा नदी (नदी इति संज्ञा) ह्रस्वं प्राप्नोति। ह्रस्वाभावपक्षे तु पुंवद्भावात् विद्वत्तरा।

नुमागमः –

उगिदचां सर्वनामस्थानेऽधातोः (७/१/७०) अधातोः उगितोः नलोपिनः अञ्चतेश्च नुमागमः स्यात् सर्वनामस्थाने इति सूत्रस्य अर्थः। अतः पचत् इति शब्दस्य शतृप्रत्ययान्तत्वेन उगित्त्वात्, पचन् पचन्तौ पचन्तः इत्यादौ नुमागमः।

यद्यपि इकारान्तः प्रत्ययः वर्तते ङसि इति तथापि सुप्प्रत्ययेषु एतानि प्रयोजनानि न प्रवर्तन्ते। तत्र इत्करणस्य प्रयोजनं तु अन्यस्मात् प्रत्ययात् वैलक्षण्यप्रदर्शनार्थमेव। तेन 'ङसिड्योः स्मात्स्मिनौ' ७/१/१५ इत्यादौ भ्रमः न भवति।

## कित्

आदेशः –

अदो जग्धिर्ल्यप्ति किति (२/४/३६), अदः जग्धिः स्यात् ल्यपि तादौ किति च। यथा क्तप्रत्यये क्तवतुप्रत्यये च परे क्रमशः जग्धः जग्धवान् इति च रूपम्।

वश्चास्यान्यतरस्यां किति (६/१/३९), वयः यस्य वो वा स्यात् किति लिटि। वत्वे ऊवतुः, ऊवुः इति रूपे। पक्षे ऊयतुः, ऊयुः इति। 'असंयोगाल्लिट् कित्' १/२/५ इति सूत्रेण कित्त्वम्।

द्यतिस्यतिमास्थामित्ति किति (७/४/४०), एषाम् इकारः अन्तादेशः स्यात् तादौ किति। अतः क्तप्रत्यये परे क्रमशः दितः सितः मितः स्थितः इति रूपाणि।

शाच्छोरन्यतरस्याम् (७/४/४१), शा,छा इत्येतयोः अन्यतरस्याम् इकारादेशः भवति तकारादौ किति प्रत्यये परतः। अतः क्तप्रत्यये परे शितः/शातः, छितः/छातः इति रूपाणि भवन्ति।

दधातेर्हिः (७/४/४२), दधातेः हिः स्यात् तकारादौ किति प्रत्यये परे। तस्मात् निष्ठापरकत्वे(क्त–क्तवतू) हितः हितवान् इति रूपे।

दो दद्धोः (७/४/४६), घुसंज्ञकस्य दा इत्येतस्य दथ् इत्ययमादेशः भवति तकारादौ किति प्रत्यये परतः। अतः निष्ठापरकत्वे दत्तः, दत्तवान् इति रूपे।

अच उपसर्गात्तः (७/४/४७), अजन्तात् उपसर्गात् परस्य दा इत्यस्य घुसंज्ञकस्य अचः तः स्यात् तादौ किति। अतः क्तप्रत्यये परे प्रत्तम्, अवत्तम् इत्यादीनि रूपाणि।

अत एकहल्मध्येनादेशादेर्लिटि (६/४/१२०), लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्य असंयुक्तहल्मध्यस्थस्य अकारस्य एकारः स्यात् अभ्यासलोपश्च किति लिटि। रेणतुः, रेणुः। पेचतुः पेचुः इत्यादि।

तॄफलभजत्रपश्च (६/४/१२२), एषाम् अत एकारः अभ्यासलोपश्च स्यात् किति लिटि सेटि थलि च। तेरतुः, तेरुः, फेलतुः, फेलुः इत्यादि।

राधो हिंसायाम् (६/४/१२३), हिंसायां राधः एत्त्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च। रेधतुः रेधुः इत्यादि।

वा जॄभ्रमुत्रसाम् (६/४/१२४), एषाम् एत्त्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च। भ्रेमतुः, भ्रेमुः इत्यादौ एकारादिः।

फणां च सप्तानाम् (६/४/१२५), एषां वा एत्त्वाभ्यासलोपो स्तः किति लिटि सेटि थलि च। फेणतुः फेणुः इत्यादौ एकारादिः।

न शसददवादिगुणानाम् (६/४/१२६), शसेः ददेः वकारादीनां गुणशब्देन भावितस्य च यः अकारः तस्य एत्वाभ्यासलोपौ न। ववमतुः ववमिथ इत्यादौ। इदं सूत्रम् एत्वाभ्यासलोपयोः निषेधकम्।

एर्लिङि (६/४/६७), घुसंज्ञकानां मास्थादीनां च एत्वं स्यात् आर्धधातुके किति लिङि। देयात् धेयात् इत्यादि। अत्र 'किदाशिषि' ३/४/१०४ इति कित्त्वम्।

वान्यस्य संयोगादेः (६/४/६८) घुमास्थादेः अन्यस्य संयोगादेः धातोः आतः एत्वं वा स्यात् आर्धधातुके किति लिङि। ग्लेयात् ग्लायत् इत्यादि।

सम्प्रसारणम् –

वचिस्वपियजादीनां किति (६/१/१५), वचिस्वपियजादीनां सम्प्रसारणं स्यात् किति प्रत्यये परतः। क्तक्तवतू इत्यनयोः परयोः वचेः सम्प्रसारणे उक्तः, उक्तवान् इति रूपे। स्वपेः सुप्तः सुप्तवान् इति च रूपे।

स्वरः –

कितः (६/१/१६२), कितः तद्धितस्य अन्तः उदात्तः। 'यदाग्ने_यः' इति उदाहरणम्। अत्र अग्निशब्दात् ढक्प्रत्ययः, यत्र ककारः इत्।

वृद्धिः –

किति च (७/२/११८) किति तद्धिते च परे अचाम् आदेः अचः वृद्धिः स्यात्। नडादिभ्यः फकि कृते 'नडादिभ्यः फक्' ४/१/९९, अनेन आदिवृद्धौ नाडायणः इति रूपम्। एवं चारायणः इत्यादि।

दीर्घः –

दीर्घः इणः किति (७/४/६९), इणः अभ्यासस्य दीर्घः स्यात् किति लिटि। ईयतुः, ईयुः इत्यत्र अपित्प्रत्ययस्य 'असंयोगाल्लिट् कित्' १/२/५ इति कित्वातिदेशात् किद्वद्भावात् दीर्घः।

दीर्घोऽकितः (७/४/८३), अकितः अभ्यासस्य दीर्घः स्यात् यङि यङ्लुकि च। एतत्तु अभावमुखं प्रयोजनम्। अकितः दीर्घविधानात्, कितः दीर्घाप्राप्तिः एव प्रयोजनम्। अतः यंयम्यते रंरम्यते इत्यत्र दीर्घाभावः। पापच्यते इत्यादौ च अभ्यासस्य दीर्घः। येषां नीगादयः अस्मिन् प्रकरणे उक्ताः आगमाः न वर्तन्ते ते अत्र अकितः।

ह्रस्वः –

एतेर्लिङि (७/४/२४), उपसर्गात् परस्य इणः अणः ह्रस्वः स्यात् आर्धधातुके किति लिङि। उदियात्, समियात्, अन्वियात् इत्यादौ ह्रस्वः।

आगमः –

सृजिदृशोर्झल्यमकिति (६/१/५८), 'सृज विसर्गे, दृशिर् प्रेक्षणे' अनयोः धात्वोः झलादौ आकिति प्रत्यये परतः अमागमः भवति। अत्रापि अभावमुखं प्रयोजनम्। अकिति इति उक्तत्वात् तद्भिन्नस्थले एव अमागमः। अतः सृष्टः, दृष्टः इत्यत्र न अमागमः, कितः क्तप्रत्ययस्य परे वर्तमानत्वात्। द्रष्टा स्रष्टा इत्यादौ तु अमागमः तृचः अकित्त्वात्।

अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् (६/१/५९), उपदेशे अनुदातः यः ऋदुपधः तस्य अम्वा स्यात् झलादावकिति परे। अत्रापि किति प्रत्यये परे न विकल्पः। तृप्तः, दृप्तः इत्यादि कितः उदाहरणम्। स्रप्ता सर्प्ता इत्यादौ तु विकल्पेन अम्।

## खित्

ह्रस्वः –

खित्यनव्ययस्य (६/३/६६), खिदन्ते परे पूर्वपदस्य ह्रस्वः स्यात्। अतः 'आत्ममाने खश्च' ३/२/८३ इति सूत्रेण खश्प्रत्यये कृते कालिम्मन्या, हरिणिम्मन्या इत्यादौ ह्रस्वः।

आगमः –

अरुर्द्विषदजन्तस्य मुम् (६/३/६७), अरुषः द्विषतः अजन्तस्य च मुमागमः स्यात् खिदन्ते उत्तरपदे न तु अव्ययस्य। अतः खशि कृते जनमेजयः इत्यत्र मुमागमः। एवं अरुन्तुदः, द्विषन्तपः, परन्तपः इत्यादौ मुमागमः।

इच एकाचोम्प्रत्ययवच्च (६/३/६८), इजन्तात् एकाचः अम्स्यात् स च स्वाद्यम्वत् (द्वितीयैकवचनम्) खिदन्ते परे। अतः खशि कृते गाम्मन्यः, स्त्रीम्मन्यः/स्त्रियम्मन्यः, नरम्मन्यः इत्यादीनि रूपाणि।

## घित्

कुत्वम् –

चजोः कुघिण्यतोः (७/३/५२), चजोः कुत्वं स्यात् घिति ण्यति च परे। भावे घञि प्रत्यये कृते, प्रत्ययस्य घित्त्वात् पचतेः कुत्वे पाकः इति रूपम्। एवं त्यागः रागः इत्यादि।

## ङित्

संज्ञा –

ङिति ह्रस्वश्च (१/४/६), इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गौ ईदूतौ ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तः ङिति। अतः मत्यै, मतये इत्यादौ रूपद्वयम्। अत्र सुपः ङितः गृह्यन्ते।

आदेशः –

तस्थस्थमिपां तान्तन्तामः (३/४/१०१) ङिल्लकारसम्बन्धिनां तसादीनां क्रमात् तामादयः आदेशाः स्युः। अतः पच्धातोः लङि एतेषु आदेशेषु कृतेषु अपचताम् ,अपचतम्, अपचत, अपचम् इति रूपाणि।

आतो ङितः (७/२/८१), अतः परस्य ङिताम् आकारस्य इय् स्यात्। अतः एध्–धातोः आताम्प्रत्यये कृते, आकारस्य इयादेशे कृते, यकारलोपादिषु कृतेषु एधेते इति रूपम्।

अङितश्च (६/४/१०३), अङितश्च हेर्धिः आदेशः भवति छन्दसि। इदम् अभावमुखं प्रयोजनम्। अ_स्मे प्रय'न्धि। 'वा छन्दसि' ३/४/८८ इति हिः अपित् वा, अपित्पक्षे 'सार्वधातुकमपित्' १/२/४ इति ङित्त्वम्। तस्मिन् पक्षे प्रवृत्तिः न।

लोपः –

नित्यं ङितः (३/४/९९), सकारान्तस्य ङिदुत्तमस्य (ङिल्लकारस्य उत्तमस्य) नित्यं लोपः स्यात्। 'अलोन्त्यस्य' १/१/५२ इत्यनेन अन्त्यस्य सकारस्य लोपः। तेन अपचाव अपचाम इत्यादौ सकारलोपः सिद्ध्यति।

इतश्च (३/४/१००), ङितः लस्य परस्मैपदम् इकारान्तं यत्तदन्तस्य लोपः स्यात्। अभवत् अपचत् इत्यादौ तिपः इकारलोपात् रूपसिद्धिः।

आगमः –

आण्नद्याः (७/३/११२), नद्यन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्य आडागमः भवति। आटि कृते 'आटश्च' ६/१/८९ इति वृद्धिः, ततश्च नद्यै, नद्याः इत्यादिरूपाणि सिद्ध्यन्ति। सुप्सु ये ङितः ते अत्र स्वीकार्याः। एवमुत्तरत्रापि।

याडापः (७/३/११३), आबन्तादुत्तरस्य ङितः प्रत्ययस्य याडागमः भवति। रमायै, रमायाः इत्यादिरूपाणि याडागमात् सिद्ध्यन्ति।

सर्वनाम्नः स्याड्ढ्रस्वश्च (७/३/११४), आबन्तात् सर्वनाम्नः परस्य ङितः स्याट् स्यात् आपश्च ह्रस्वः। अयं याडागमस्य अपवादः। अनेन सर्वस्यै, सर्वस्याः इत्यादीनि रूपाणि सिद्ध्यन्ति।

विभाषा द्वितीयातृतीयाभ्याम् (७/३/११५) द्वितीयातृतीयाभ्यां ङितः स्याट् स्यात् आपश्च ह्रस्वः। अतः अत्र पक्षे स्याट्, पक्षे याट् प्राप्यते इति कारणात् द्वितीयस्यै, द्वितीयायै इत्यादिरूपाणि सिद्ध्यन्ति।

गुणः –

जाग्रोविचिण्णल्ङित्सु (७/३/८५), जागर्तेः गुणः स्यात् विचिण्णल् ङिद्भ्यो अन्यस्मिन् वृद्धिविषये प्रतिषेधविषये च। जागरयति इत्यादौ गुणः।

घेर्ङिति (७/३/१११), ङिसंज्ञकस्य ङिति सुपि गुणः स्यात्। अतः हरिशब्दात् ङे इत्यादिप्रत्ययेषु परेषु गुणः, हरये, हरेः इत्यादिरूपाणि।

## चित्

स्वरः –

चितः (६/१/१६०), चितः अन्तः उदात्तः भवति। भ_ङ्गु_रम्, भा_सु_रम्, 'भञ्जभासमिदो घुरच्' ३/२/१६१ इत्यनेन घुरच्प्रत्ययः।

तद्धितस्य (६/१/१६४), चितः तद्धितस्य अन्तः उदात्तः भवति। कौ_ञ्जा_य_नाः। अत्र 'गोत्रे कुञ्जादिभ्यः च्फञ्' ४/१/९८ च्फञ्प्रत्ययः।

## ञित्

लुक् –

ण्यक्षत्रियार्षञितो यूनि लुगणिञोः (२/४/५८), ण्यप्रत्ययान्तात् क्षत्रियगोत्रप्रत्ययान्तात् ऋष्यभिधायिनः गोत्रप्रत्ययान्तात् ञितश्च परयोः युवाभिधायिनोः अणिञोः लुक् स्यात्। 'तिकादिभ्यः फिञ्' ४/१/१५४ इत्यनेन तिकशब्दात् फिञि, तैकायनिः इति रूपम्। तस्मात् तैकायनेः अपत्यं युवा इत्यर्थे 'तस्यापत्यम्' ४/१/९२ इति अणः अनेन लुक्।

प्रत्ययः –

ञितश्च तत्प्रत्ययात् (४/३/१५५), ञिद्यो विकारावयवप्रत्ययः तदन्तात् अञ् स्यात् तयोः एव अर्थयोः। दाधित्थस्य विकारः अवयवः वा दाधित्थम्। 'अनुदात्तादेश्च' ४/३/१४० इति अञ्, ततः अनेन अञ्। शामीलस्य विकारः अवयवः वा शामीलम्। 'शम्याः ष्लञ्' ४/३/१४२, ततः अनेन अञ्।

## टित्

आदेशः –

टित आत्मनेपदानां टेरे (३/४/७९), टितः लकारस्य स्थाने यान्यात्मनेपदानि तेषां टेरेकारादेशः भवति। एधते एधेते एधन्ते इत्यादौ इकारस्य एकारादेशः। टित्त्वेन लडादयः षड् ग्राह्याः।

थासः से (३/४/८०), टितः लकारस्य यः थास् तस्य से इति आदेशः भवति। एधसे इत्यादौ से इति आदेशः अनेन सूत्रेण।

प्रत्ययः –

टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः (४/१/१५), अनुपसर्जनं यत् टिदादि, तदन्तं यददन्तं ततः स्त्रियां ङीप्प्रत्ययः भवति। कुरुचरी इत्यत्र चर्–धातोः 'चरेष्टः' ३/२/१६ इति सूत्रेण टप्रत्यये टित्त्वात् तदन्तस्य अनेन ङीप्।

## डित्

लोपः –

ति विंशतेर्डिति (६/४/१४२), भस्य विंशतेः तिशब्दस्य डिति प्रत्यये परे लोपः स्यात्। विंशतिशब्दात् पूरणार्थे 'तस्य पूरणे डट्' ५/२/४८ इति डट्प्रत्यये कृते, तिशब्दस्य लोपे विंशः इति रूपम्।

टेः (६/४/१४३), डिति भस्य टेः लोपः भवति। कतरशब्दात् स्वमोः 'अदड्डतरादिभ्यः पञ्चभ्यः' ७/१/२५ इति अदडादेशे कृते, डित्त्वात् टिलोपे कतरत् इति रूपम्।

डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः – 'लुटः प्रथमस्य डारौरसः' २/४/८५ इति सूत्रेण तिप् तस् झि इत्येतेषां स्थाने क्रमशः डा रौ रस् एते विधीयन्ते। तत्र डा इत्ययं डित्। अतः भू तास् आ इति स्थिते, अत्र भसंज्ञायाः अभावेऽपि, डित्करणस्य प्रयोजनान्तरासत्त्वात् डित्त्वसामर्थ्यात् एव टेः लोपः भवति। एवं च डित्त्वे सति भसंज्ञायाः अभावेऽपि टेलोपः भवति।

## तित्

स्वरः –

तित्स्वरितम्(६/१/१८२), तित्स्वरितं भवति। का_र्य'म् हा_र्य'म् इत्यादौ 'ऋहलोर्ण्यत्' ३/१/१२४ इति ण्यत्प्रत्ययः।

## नित्

स्वरः –

तादौ च निति कृत्यतौ (६/२/५०), तकारादौ निति तुशब्दवर्जिते कृति परे अनन्तरो गतिः प्रकृत्या स्यात्। 'सङ्ग'तिं गोः' इत्यादौ।

## पित्

स्वरः –

अनुदात्तौ सुप्पितौ (३/१/४), सुपः पितः च प्रत्ययाः अनुदात्ताः भवन्ति। 'न यो युच्छ'ति' इति उदाहरणम्। अत्र शपः अनुदात्तत्वम्।

भीह्रीभृहुमदजनघनदरिद्राजागरां प्रत्ययात्पूर्वं पिति (६/१/१८९), भीप्रभृतीनाम् अभ्यस्तानां पिति लस्वार्वधातुके परे प्रत्ययात् पूर्वमुदात्तं भवति। बि_भेति'। जि_ह्रेति'। इत्यादि।

गुणः –

गुणोऽपृक्ते (७/३/९१), ऊर्णोतेर्गुणः स्यादपृक्ते हलादौ पिति सार्वधातुके। प्रौर्णोत्, प्रौर्णोः इत्यत्र तिपि सिपि च गुणः अनेन सिद्ध्यति।

नाभ्यस्तस्यापि पिति सार्वधातुके (७/३/८७), अभ्यस्तसंज्ञकस्य अङ्गस्य लघूपधस्य अजादौ पिति सार्वधातुके गुणः न भवति। नेनिजानि, वेविजानि, अनेनिजम् इत्यादौ गुणाभावः पित्त्वात्।

वृद्धिः –

उतो वृद्धिर्लुकि हलि (७/३/८९), उकारान्तस्य अङ्गस्य वृद्धिर्भवति लुग्विषये हलादौ पिति सार्वधातुके, न तु अभ्यस्तस्य। यौति यौषि यौमि, नौति नौषि नौमि इत्यादौ वृद्धिः। अत्र अदिप्रभृतिभ्यः शपः इति लुक्।

ऊर्णोतेर्विभाषा (७/३/९०), ऊर्णोतेः वा वृद्धिः स्यात् हलादौ पिति सार्वधातुके। प्रोर्णौति प्रोर्णोति। प्रोर्णौषि प्रोर्णोषि इत्यादि।

आगमः –

ह्रस्वस्य पिति कृति तुक् (६/१/७१), ह्रस्वान्तस्य धातोः पिति कृति तुक् भवति। यथा अग्निचित् सोमसुत् इत्यादौ क्विप्प्रत्यये परे तुगागमः।

तृणह इम् (७/३/९२), तृहः श्नमि कृते इमागमः स्यात् हलादौ पिति। तृणेढि, तृणेक्षि इत्यादौ इमागमः अनेन भवति।

ब्रुवः ईट् (७/३/९३), ब्रुवः परस्य हलादेः पितः ईट् स्यात्। ब्रवीमि, ब्रवीषि, ब्रवीमि, अब्रवीत् इत्यादौ अनेन सूत्रेण ईट्।

यङो वा (७/३/९४), यङन्तात् परस्य हलादेः पितः सार्वधातुकस्य ईड् वा स्यात्। वावदीति, रोरवीति इत्यादौ इट्।

अतिदेशः –

पित्करणात् अपितां सार्वधातुकानां ङिद्वद्भावः (सार्वधातुकमपित्, १/२/४), लिट्प्रत्ययस्य किद्वद्भावः (असंयोगाल्लिट् कित्, १/२/५) च भवति।

अतिदेशः –

सार्वधातुकमपित् (१/२/४), अपित् सार्वधातुकं ङिद्वत् भवति। तद्यथा चिनुतः। अत्र तस्प्रत्ययः। अयं च अपित्, पिद्भिन्नः। अतः ङिद्वत्। तस्मात् न गुणः।

## रित्

स्वरः –

उपोत्तमं रिति (६/१/२१४), रित्प्रत्ययान्तस्य उपोत्तमम् उदात्तं स्यात्। क_र_णीय'म्। 'तव्यत्तव्यानीयरः' ३/१/९६ इति अनीयर्प्रत्ययः। प_टु_जा_तीयः', 'प्रकारवचने जातीयर्' ५/३/६९

## लित्

स्वरः –

लिति (६/१/१९०), लकारेत्प्रत्ययात् पूर्वम् उदात्तं भवति। ण्वुल् प्रत्ययस्य लित्त्वात्, चि_कीर्ष'कः जि_हीर्ष'कः इत्यादौ उदात्तं भवति।

## शित्

आदेशः –

इषुगमियमां छः (७/३/७७), एषाम् शिति परतः छकारादेशः भवति। इष्धातोः लटि एकवचने तिपि, 'तुदादिभ्यः शः' ३/१/७७ विहिते, शकारस्य इत्त्वात् षकारस्य स्थाने छकारे इच्छति इति रूपम्। एवं गच्छति यच्छति इत्यादौ शपः इत्त्वात् छकारादेशः।

पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमनिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः (७/३/७८) पा घ्रा ध्मा स्था म्ना दाण् दृशि अर्ति सर्ति शद सद इत्येतेषां पिब जिघ्र धम तिष्ठ मन यच्छ पश्य ऋच्छ धौ शीय सीद इत्येते आदेशाः भवन्ति शिति परतः। यथा पा इत्यस्य तिपि शपि पिबति इति रूपम्। एवं जिघ्रति, धमति, तिष्ठति, मनति इत्यादि।

ज्ञाजनोर्जा (७/३/७९), अनयोः जादेशः स्यात् शिति। ज्ञाधातोः तिपि श्नाप्रत्यये च कृते, तस्य शित्त्वात् जादेशे जानाति इति, जनधातोः तिपि, श्यनि च तस्य शित्त्वात् जायते इति च रूपम्।

दीर्घः –

ष्ठिवुक्लमुचमां शिति (७/३/७५), एषां दीर्घः स्यात् शिति परतः। ष्ठीवति क्लामति आचामति इत्यादौ शिति प्रत्यये परतः दीर्घः।

क्रमः परस्मैपदेषु (७/३/७६), क्रमेः दीर्घः स्यात् परस्मैपदे परे शिति। क्राम्यति इत्यत्र दीर्घः श्यनः शित्त्वात्। क्रामति इत्यादौ दीर्घः शपः शित्त्वात्।

ह्रस्वः –

प्वादीनां ह्रस्वः (७/३/८०), पू इत्यादीनां ह्रस्वः भवति शिति परतः। पूञ्धातोः तिपि, श्नाप्रत्यये च कृते, तस्य च शित्त्वात् अनेन ह्रस्वे पुनाति इति रूपम्। एवं लूञ्धातोः लुनाति इति।

मीनातेर्विभाषा (७/३/८१), मीनातेः अङ्गस्य शिति प्रत्यये परतः ह्रस्वः भवति निगमविषये। प्रमि'णन्ति व्र_तानि' इति उदाहरणम्।

गुणः –

मिदेर्गुणः (७/३/८२), मिदेः इकः गुणः स्यात् इत्संज्ञकशकारादौ। मेद्यति, मेद्यतः, मेद्यन्ति इत्यादौ गुणः भवति शित्परकत्वात्।

आदेच उपदेशेऽशिति (६/१/४५), एजन्तः यः धातुः उपदेशे तस्य आकारादेशः भवति शिति प्रत्यये न भवति। अयं विधिः शिद्भिन्नानां विषये। अतः अस्य विधेः अप्रवृत्तिः अपि शित्करणस्य फलम्। तद्यथा ग्लैधातोः तिपि शपि, शित्परकत्वात् न आत्वम्। अपितु आयादेशे ग्लायति इति रूपम्। आत्त्वस्य उदाहरणं तु धेट्धातोः लिटि, एजन्तत्वात् अनेन आत्वे 'आत औ णलः' ७/१/३४ इत्यनेन णलः औ इत्यादेशे कृते दधौ इति रूपम्।

## षित्

प्रत्ययः –

षिद्गौरादिभ्यश्च (४/१/४१), षिद्भ्यः गौरादिभ्यश्च स्त्रियां ङीष्प्रत्ययः भवति। नर्तकी अत्र नृतीधातोः ष्वुन्प्रत्ययः 'शिल्पिनि ष्वुन्' ३/१/१४५ इति, तत्र षकारः इत्, अतः ङीष्।

## सित्

संज्ञा –

सिति च (१/४/१६), सिति प्रत्यये परतः पूर्वं पदसंज्ञं भवति।

पर्शूनां समूहः पार्श्वम्। पर्श्वा णस् वक्तव्यः इति णस्, अनेन पदत्वात् भसंज्ञायाः बाधात् 'ओर्गुणः' ६/४/१४६ इति गुणः न। 'तद्धितेष्वचामादेः' ७/१/११७ इति वृद्धिः।

<u>इत्संज्ञकवर्णद्वयं वर्णत्रयं वा आश्रित्य कार्यविधायकानि सूत्राणि –</u>

## कित्–ङित्

सम्प्रसारणम् –

ग्रहिज्याविव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च (६/१/१६), एषां किति ङिति च सम्प्रसारणं स्यात्। यथा ग्रहधातोः क्तप्रत्यये परे सम्प्रसारणे गृहीतः इति रूपम्। एवं श्नाप्रत्यये परे, तस्य 'सार्वधातुकमपित्' १/२/४ इत्यनेन ङित्त्वात् सम्प्रसारणे गृह्णाति इति रूपम्।

आदेशः –

च्छ्वोः शूडनुनासिके च(६/४/१९), छ इत्येतस्य सतुक्कस्य वकारस्य च स्थाने यथासंख्यं 'श्' 'ऊठ्' इत्येतावादेशौ भवतः, अनुनासिकादौ प्रत्यये परतः क्वौ झलादौ च क्ङिति। यथा प्रच्छधातोः किति पृष्टः, पृष्टवान्, पृष्ट्वा इत्यादीनि रूपाणि।

घुमास्थागापाजहातिसां हलि (६/४/६६), घुसंज्ञकानाम् आतः ईत् स्यात् हलादौ किति ङिति आर्धधातुके। दीयते,मीयते इत्यादौ ईत्। अत्र 'सार्वधातुके यक्' ३/१/६७ इति यक्प्रत्ययः।

अत उत्सार्वधातुके (६/४/११०), उप्रत्ययान्तस्य कृञः अकारस्य उत्स्यात् सार्वधातुके किति ङिति। कुरुतः, कुर्वन्ति इत्यादौ उकारः। 'सार्वधातुकमपित्' १/२/४ इति ङित्त्वम्।

ई हल्यघोः (६/४/११३), श्नाभ्यस्तयोः आतः ईत्स्यात् सार्वधातुके किति ङिति हलि न तु घुसंज्ञकस्य। लुनीतः, पुनीतः, लुनीते इत्यादौ श्नाप्रत्ययस्य आकारस्य ईकारः अनेन।

इद्दरिद्रस्य (६/४/११४), दरिद्रातेः इकारः स्यात् हलादौ किति ङिति सार्वधातुके। दरिद्रितः, दरिद्रिथः, दरिद्रिवः इत्यादौ इकारादेशः।

भियोऽन्यतरस्याम् (६/४/११५), भियः वा इकारः स्यात् हलादौ किति ङिति सार्वधातुके। बिभितः, बिभीतः इत्यादौ विकल्पेन इकारः। पक्षे 'ई हल्यघोः' ६/४/११३ इत्यनेन ईकारः।

जहातेश्च (६/४/११६), जहातेः च इत्स्यात् वा हलादौ किति ङिति सार्वधातुके। जहितः पक्षे 'ई हल्यघोः' ६/४/११३ इत्यनेन ईकारे जहीतः इति रूपम्। एवं जहिथः जहीथः इत्यादि।

अयङ् यि क्ङिति (७/४/२२), शीङो अयङादेशः स्यात् यादौ किति ङिति परे। ङित्वात् अन्त्यस्य स्थाने। शय्यते, शाशय्यते, प्रशय्य, उपशय्य इत्यादौ अनेन अयङादेशः।

शास इदङ्हलोः (६/४/३४), शास उपधाया इत् स्यात् अङि हलादौ किति ङिति च। हलादौ किति यथा क्तप्रत्यये शिष्टः इति रूपम्।

जनसनखनां सञ्झलोः (६/४/४२) एषाम् आकारः अन्तादेशः स्यात् झलादौ सनि झलादौ किति ङिति च। जाति साति खाति इत्यादीनि अस्य उदाहरणानि।

ये विभाषा (६/४/४३), जनसनखनाम् आत्त्वं वा यादौ किति ङिति च। यथा जन्धातोः जायते जन्यते इति रूपे। अत्र 'सार्वधातुके यक्' ३/१/६७ इति यक्प्रत्ययः।

आगमः –

दीङो युडचि क्ङिति (६/४/६३), दीङः परस्य अजादेः क्ङितः आर्धधातुकस्य युट् स्यात्। यथा उपदिदीये उपदिदीयाते, उपदिदीयिरे इत्यादौ।

लोपः –

अनिदितां हल उपधाया क्ङिति(६/४/२४), हलन्तानाम् अनिदिताम् अङ्गानाम् उपधायाः नस्य लोपः स्यात् किति ङिति च। स्रंसु – स्रस्तः, स्रस्यते, ध्वंसु – ध्वस्तः, ध्वस्यते इत्यादि।

अनुदात्तोपदेशवनिततनोत्यादीनामनुनासिकलोपो झलि क्ङिति (६/४/३७), अनुदात्तोपदेशानां वनत्यादीनां च अनुनासिकलोपः स्यात् झलादौ किति ङिति परे। यथा रमुधातोः रत्वा रतः रतवान् रतिः इत्यादीनि रूपाणि।

आतो लोप इटि च (५/४/६४), अजाद्योः आर्धधातुकयोः क्ङिदिटोः परयोः आतः लोपः स्यात्। किति पपतुः पपुः 'असंयोगाल्लिट् कित्' १/२/५ गोदः कम्बलदः 'आतोऽनुपसर्गे कः' ३/२/३। ङिति प्रदा प्रधा 'आतश्चोपसर्गे' ३/३/१०६ इति अङ् इत्यादि।

गमहनजनखनघसां लोपः क्ङित्यनङि (६/४/९८), एषाम् उपधायाः लोपः स्यात् अजादौ किति ङिति न तु अङि। तद्यथा गम् इत्यस्मात् लिटि अतुसि उसि च 'असंयोगाल्लिट् कित्' १/२/५ कित्त्वे अनेन उपधालोपे सति जग्मतुः जग्मुः इति रूपे।

तनिपत्योश्छन्दसि (६/४/९९), एतयोः उपधालोपः किति ङिति प्रत्यये छन्दसि। वित'त्निरे क_वय_ः, श'कु_ना इ'व पप्तिम। भाषायां तु लोपाभावात् वितेनिरे पेतिम इति रूपे।

घसिभसोर्हलि च (६/४/१००), घसि भस इत्येतयोः छन्दसि उपधायाः लोपः भवति हलादौ अजादौ च क्ङिति प्रत्यये परतः। 'ब_ब्धां ते_ हरी' धा_नाः', सन्धि'श्च मे_'।

श्नसोरल्लोपः (६/४/१११), श्नस्य अस्तेश्च अकारस्य लोपः स्यात् सार्वधातुके किति ङिति। स्तः सन्ति इत्यादौ अस्तेः अकारलोपात् रूपसिद्धिः। एवं रुन्धः रुन्धन्ति इत्यादौ श्ना इति विकरणप्रत्ययस्य अकारस्य लोपः ।

श्नाभ्यस्तयोरातः (६/४/११२), अनयोः आतः लोपः स्यात् किति ङिति सार्वधातुके। क्रीधातोः क्र्यादित्वात् श्नाप्रत्यये क्रीणा अन्ति इति स्थिते अनेन आकारस्य लोपे क्रीणन्ति इति रूपम्। दरिद्रा अति इति स्थिते 'जक्षित्यादयः षट्' ६/१/६ इत्यनेन अभ्यस्तत्वे अनेन आकारस्य लोपे दरिद्रति इति रूपम्।

ह्रस्वः –

उपसर्गाद्ध्रस्व ऊहतेः (७/४/२३), उपसर्गात् उत्तरस्य ऊहतेः अङ्गस्य ह्रस्वः भवति यादौ किति ङिति प्रत्यये। समुह्यते, समुह्य, अभ्युह्य इत्यादौ ह्रस्वः।

दीर्घः –

अकृत्सार्वधातुकयोः दीर्घः (७/४/२५), अजन्तस्य अङ्गस्य दीर्घः स्यात् यादौ किति ङिति प्रत्यये, नतु कृत्सार्वधातुकयोः। सुखायते। अत्र 'सुखादिभ्यः कर्तृवेदनायाम्' ३/१/१८ इति क्यङ्।

अनुनासिकस्य क्विझलोः क्ङिति (६/४/१५), अनुनासिकान्तस्य उपधायाः दीर्घः स्यात् क्वौ झलादौ च क्ङिति। यथा शम्धातोः क्तादिप्रत्यये परे शान्तः, शान्तवान्, शान्ता, शान्तिः, शंशान्तः इत्यादीनि रूपाणि।

## ञित्–णित्

आदेशः –

हो हन्तेर्ञ्णिन्नेषु (७/३/५४), ञिति णिति च प्रत्यये नकारे च परे हन्ते हकारस्य कुत्वं स्यात्। घातयति (णिच्), घातकः (ण्वुल्प्रत्ययः), साधुघाती इत्यादौ।

हनस्तोऽचिण्णलोः (७/३/३२), हन्तेः तकारः अन्तादेशः स्यात् चिण्वर्जे ञिति णिति। यथा घातयति। अत्र णिचि परे हन्तेः नकारस्य तकारः।

वृद्धिः –

अचो ञ्णिति (७/२/११५), अजन्ताङ्गस्य वृद्धिः स्यात् ञिति णिति च परे। यथा सखिशब्दात् सर्वनामस्थानप्रत्यये परे तेषां 'सख्युरसम्बुद्धौ' ७/१/९२ इति णित्त्वात् अनेन वृद्धौ सखायौ सखायः इत्यादीनि रूपाणि। एवं कारः, हारः इत्यादौ घञि वृद्धिः।

अतः उपधायाः (७/२/११६), उपधायाः अतः वृद्धिः स्यात् ञिति णिति च प्रत्यये परतः। यथा पाकः(घञ्), पाचयति (णिच्), पाचकः (ण्वुल्) इत्यादि।

नोदात्तोपदेशस्य मान्तस्यानाचमेः (७/३/३४), आचामिवर्जितस्य उदात्तोपदेशस्य मान्तस्य उपधाया वृद्धिर्न स्यात् चिणि, ञिति णिति कृति च। अनेन वृद्धिः निषिध्यते। अतः शमः दमः इत्यत्र अतः उपधायाः (७/२/११६) इति वृद्धिर्न।

जनिवध्योश्च (७/३/३५), अनयोः उपधाया वृद्धिः न स्यात् चिणि, ञिति णिति कृति च। अतः जनकः वधकः इत्यादौ ण्वुलि न वृद्धिः।

तद्धितेष्वचामादेः (७/२/११७), ञिति णिति च तद्धितेषु अचामादेः अचः वृद्धिः स्यात्। गार्ग्यः इत्यादौ यञ्प्रत्ययपरकत्वात् वृद्धिः, औपगवः (अण्) इत्यादौ णित्प्रत्ययपरकत्वात्।

एतस्य सूत्रस्य अनेके अपवादाः सन्ति। ते सप्तमाध्यायस्य तृतीये पादे पठिताः। न 'य्वाभ्यां पदान्ताभ्यां०' ७/३/३ इति सूत्रात् आरभ्य 'पदान्तस्यान्यतरस्याम्' ७/३/९ इति सूत्रपर्यन्तं ते वर्तन्ते। एतेषाम् अर्थाः ग्रन्थान्तरात् प्राप्याः।

अतिदेशः

गाङ्कुटादिभ्योऽञ्णिन्ङित् (१/२/१) ञ्णौ इतौ यस्य सः ञ्णित्। तद्भिन्नः अञ्णित्। गाङादिभ्यः कुटादिभ्यः च परे अञ्णितः प्रत्ययाः ङितः भवन्ति। अतः कुटिता इत्यादौ गुणः न प्रवर्तते।

आगमः –

आतो युक्चिण्कृतोः (७/३/३३), आदन्तानां युगागमः स्यात् चिणि ञिति णिति कृति च। तद्यथा दायः (घञ्) इत्यत्र ञित्परकत्वात्, दायकः (ण्वुल्) इत्यत्र णित्परकत्वात् च युक्।

## ञित्–नित्

स्वरः –

ञ्नित्यादिर्नित्यम् (६/१/१९४), ञिदन्तस्य निदन्तस्य च आदिः उदात्तः भवति। गार्ग्यः', 'गर्गादिभ्यो यञ्' ४/१/१०५। वासु'देवकः, 'वासुदेवार्जुनाभ्यां वुन्' ४/३/९८।

## गित् –कित्

आगमनिषेधः –

श्र्युकः किति (७/२/११), श्रिञः एकाचः उगन्ताच्च परयोः गित्कितोः इण्न स्यात्। युत्वा, युतवान्, तीर्त्वा, तीर्णः, तीर्णवान् इत्यादीनि कितः उदाहरणानि। गितः यथा 'ग्लाजिस्थश्च ग्स्नुः' ३/२/१३९ ग्स्नुप्रत्यये भूष्णुः इति रूपम्।

## कित्–ङित्–गित्

गुणवृद्धिनिषेधः–

क्ङिति च (१/१/५), गित्–कित्–ङित्–निमित्ते ये गुणवृद्धी प्राप्नुतः ते न भवतः। गित् यथा जिधातोः ग्स्नुप्रत्यये जिष्णुः, चितः, चितवान् इत्यादौ कित्प्रत्ययपरकत्वात् न गुणः, चिनुतः इत्यादौ ङित्प्रत्ययपरकत्वात् न गुणः।

## कित्–ञित्–णित्

आकारः –

देविकाशिंशिपादित्यवाड्दीर्घसूत्रश्रेयसामात् (७/३/१), एषां पञ्चानां वृद्धिप्राप्तौ आदेः अचः आत् ञिति णिति किति च। दाविकम् उदकम्। देविकाशब्दात् अणि, अनेन आत्वे दाविकमिति रूपम्। एवं शांशपः चमसः।

आदेशः –

केकयमित्रयुप्रलयानां यादेरियः (७/३/२), एषां यकारादेः इयादेशः स्यात् ञिति णिति किति च तद्धिते परे। कैकेयः इत्यत्र अञ्। केकयशब्दस्य यकारादेः इयादेशे, केक इय् अ इति जाते, गुणे कैकेयः इति रूपम्। एवं प्रालेयम् इत्यत्र अण्।

वृद्धिः –

अवयवादृतोः (७/३/११), अवयववाचिनः पूर्वपदात् ऋतुवाचिनः अचाम् आदेः अचः वृद्धिः स्यात् ञिति णिति किति च तद्धिते परतः। पूर्ववार्षिकम्। 'वर्षाभ्यष्ठक्' ४/३/१८ पूर्वहैमनः। 'सर्वत्राण् च तलोपश्च' ४/३/२२ अपरवार्षिकम्। अपरहैमनम् इत्यादौ वृद्धिः।

सुसर्वार्धाज्जनपदस्य (७/३/१२), सु, सर्व, अर्ध इत्येतेभ्यः जनपदवाचिनः उत्तरपदस्य वृद्धिः स्यात् ञिति णिति किति च तद्धिते परतः। सुपाञ्चालकः, सर्वपाञ्चालकः, अर्धपाञ्चालकः। 'अवृद्धादपि बहुवचनविषयात्' ४/२/१२५ इति वुञ्।

दिशोऽमद्राणाम् (७/३/१३), दिग्वाचकात् जनपदवाचिनः मद्रवाचिभिन्नस्य वृद्धिः स्यात्, ञिति णिति किति च तद्धिते परतः। पूर्वपाञ्चालकः, अपरपाञ्चालकः, दक्षिणपाञ्चालकः।

प्राचां ग्रामनगराणाम् (७/३/१४), दिशः परेषां प्राच्यग्रामवाचिनां प्राच्यनगरवाचिनां च अवयवस्य आदेः वृद्धिः ञिति णिति किति च

तद्धिते परे। पूर्वैषुकामशमः, अपरैषुकामशमः। 'तत्र भवः' ४/३/५३ इति अण्। पूर्वपाटलिपुत्रकः, अपरपाटलिपुत्रकः इत्यादि। 'अवृद्धादपि बहुवचनविषयात्' ४/२/१२५ इति वुञ्।

संख्यायाः संवत्सरसंख्यस्य च (७/३/१५), संख्यायाः उत्तरपदस्य संवत्सरसंख्यस्य वृद्धिः स्यात् ञिति णिति किति च तद्धिते परे। द्विसांवत्सरिकः, द्विषाष्टिकः, द्विसाप्ततिकः। 'तमधीष्टो भृतो भूतो भावी' ५/१/८० इति ठञ्।

वर्षस्याभविष्यति (७/३/१६), अभविष्यति यो ञिदादिः, तस्मिन् परे संख्याया उत्तरपदस्य वर्षस्य वृद्धिः। द्विवार्षिकः, त्रिवार्षिकः।

परिमाणान्तस्यासंज्ञाशाणयोः (७/३/१७), परिमाणान्तरस्य अङ्गस्य संख्यायाः उत्तरपदस्य वृद्धिः स्यात् ञिति णिति किति च परतः, संज्ञायां विषये शाणे चोत्तरपदे तु न। परमनैष्किकः। 'तेन क्रीतम्' ५/१/३७ इति ठञ्।

जे प्रोष्ठपदानाम् (७/३/१८), प्रोष्ठपदानाम् उत्तरपदस्य अचाम् आदेः अचः वृद्धिः स्यात् जातार्थे ञिति णिति किति च। प्रोष्ठपदासु जातः प्रोष्ठपादः माणवकः, 'सन्धिवेला०' इति ४/३/१६ अण्।

हृद्भगसिन्ध्वन्ते पूर्वपदस्य च (७/३/१९), हृदाद्यन्ते पूर्वोत्तरपदयोः अचाम् आदेः अचः वृद्धिः ञिति णिति किति च। सौहार्दम्। सौहार्द्यम्। सौभाग्यम् इत्यादि।

अनुशतिकादीनां च (७/३/२१), एषाम् उभयपदवृद्धिः स्यात् ञिति णिति किति च परे। अनुशतिकस्य इदम् आनुशतिकम्, आनुहौडिकः आधिदैविकम् इत्यादि।

देवताद्वन्द्वे च (७/३/२१), देवताद्वन्द्वे च पूर्वत्तरपदयोः आद्यचः वृद्धिः स्यात्, ञिति णिति किति च परे। आग्निमारुतम्। 'सास्य देवता' ४/२/२४ इति अण्।

प्राचां नगरान्ते (७/३/२४), प्राचां देशे नगरान्ते अङ्गे पूर्वपदस्य उत्तरपदस्य च अचामादेः अचः वृद्धिः स्यात् ञिति णिति किति च। सुह्मनगरे भवः सौह्मनागरः। पौर्वनागरः इत्यादि।

जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् (७/३/२५), जङ्गलाद्यन्तस्य अङ्गस्य पूर्वपदस्य अचमादेः अचः वृद्धिः उत्तरपदस्य वा ञिति णिति किति च। कौरुजङ्गलम्, कौरुजाङ्गलम्। वैश्वधेनवम्, वैश्वधैनवम्। 'तत्र भवः' ४/३/५३ इति अण्।

अर्धात् परिमाणस्य पूर्वस्य तु वा । ७/२/२६), अर्धात् परिमाणवाचकस्य उत्तरपदस्य आदेः अचः वृद्धिः पूर्वपदस्य तु वा ञिति णिति किति च। अर्धद्रोणेन क्रीतम् अर्धद्रौणिकम्, आर्धद्रौणिकम्, आर्धकौडविकम्, अर्धकौडविकम्। 'तेन क्रीतम्' ५/१/३७ इति ठञ्।

नातः परस्य (७/३/२७), अर्धात् परस्य परिमाणाकारस्य वृद्धिः न पूर्वपदस्य तु वा ञिति णिति किति च। अर्धप्रस्थिकम्, आर्धप्रस्थिकम्।

नञः शुचीश्वरक्षेत्रज्ञकुलनिपुणानाम् (७/३/३०), नञः परेषां शुच्यादिपञ्चानाम् आदेः अचः वृद्धिः पूर्वपदस्य तु वा ञिति णिति किति च परे। अशौचम्, आशौचम्। 'तत आगतः' ४/३/५४ इति अण्। आनैश्वर्यम्, अनैश्वर्यम्। 'गुणवचनब्राह्मणादिभ्यः०' ५/१/१२४ इति ष्यञ्।

यथातथयथापुरयोः पर्यायेण (७/३/३१), नञः परयोः एतयोः पूर्वोत्तरपदयोः पर्यायेणादेः अचः वृद्धिः ञिति णिति किति च। आयथातथ्यम्, अयाथातथ्यम्। आयथापुर्यम्, आयाथापुर्यम् इत्यादि। 'गुणवचनब्राह्मणादिभ्यः०' ५/१/१२४ इति ष्यञ्।

**********

## उपसंहारः

व्याकरणाध्ययनकाले लिखितः अयं लघुप्रबन्धः अधिगमसौलभ्याय। स एव अल्पशः परिष्कृत्य पुनः प्रकाशितः। अनेन प्रबन्धेन कस्यापि व्याकरणजिज्ञासोः प्रयोजनं भवति चेत् मम अयम् अल्पः यत्नः कृतार्थः स्यात्। स्यात् अस्य प्रबन्धस्य परिष्कारविषयता। एतं ग्रन्थं परिशीलयन्तः विपश्चितः, परिष्कारार्हांशसूचनेन माम् अनुगृह्णन्तु इति प्रार्थये।

**********